भगवान् विश्वम्भर



ध्यानम्   शिवोऽसि त्वं शक्तिरसि सा त्वं नारायणोऽप्यसि ।
यदत्रैश्वर्यं चेतनाय तत्सर्वं त्वयि विद्यते ॥

पि. एस् वारियराख्यातो विख्याता वैद्यसत्तम
भूगतो "भुवनेड्येन्द्रे" धन्यकृत्ये"दिवगत





"वैद्यरत्नबिरुदाङ्कित" श्री पि एस् वारियर् महाशय
कोट्टक्कल 'आर्यवैद्यशाला , आर्यवैद्यचिकित्साशाला, आर्यवैद्यपाठ-
शालादीना स्थापक अष्टाङ्गशारीर, बृहच्छारीर, चिकित्सासंग्रह इत्यादि
ग्रन्थाना कर्त्ता विपश्चिदपश्चिमाग्रमर स्मर्यपुण्योऽस्मद्गुरुवर्य.

# आमुखम्

श्रीमद्भिः रघुनाथार्यमहोदयैर्विरचितमिदं श्रीमद्भगवतो महाविष्णोर्नाम्नां सहस्रस्य, प्रतिनाम श्लोकरूपं व्याख्यानं, श्रीमच्छंकरभगवत्पादीय भाष्यव्याख्यानुसारि वर्तत इति आमूलाग्रपरिशीलनेन अनुभूय सुदृढं वक्तुं शक्नुमः । तत्र तत्र व्याकरण-शास्त्रानुसारेण तत्तत्पुराणानुसारेण च केषाचित्पदानां विशेषार्थोऽपि सूचितो दरीदृश्यते । एवंकस्य नाम्न एकैकं श्लोक इत्येव रीत्या सहस्रनाम्नां सहस्रसंख्याकैः श्लोकैः पदव्युत्पत्ति—श्रुत्यादिवचनप्रमाणोक्तिपूर्वकं विरचितमिदं व्याख्यानमिति विशेषोऽयं तद्वाचकानां अनुभवविषयीभवेदेव । एतच्छ्लोकपठनेऽपि सहस्रनामपारायण-फलं विशेषतो लभ्यत एव इत्यप्यनुक्तिसिद्धं अनुभवैकवेद्यं च ।

अर्थज्ञानपुरस्सरं नामपारायणेन फलविशेषोऽपि, भगवन्महिमानुभावरूप आनन्दाविर्भावरूपश्च अनुभववेद्य एव । ईदृशं उत्तमं व्याख्यानं श्लोकरूपेण विरचितवतां श्रीमतां रघुनाथार्यमहोदयानां परिश्रमोऽयं बहूनामुपकाराय यथा स्यात् तथा मुद्राप्य प्रकटनेन सफलं स्यात् । मुद्रितग्रन्थं स्वीकृत्य भक्त्या श्रद्धया च तदर्थानु-सन्धानपूर्वकं पारायणेन च परिपूर्णं फलं स्यादिति हेतोः मुद्रितपुस्तकं भक्ताः स्वीकृत्य स्वयमपि कृतार्था भवेयुरित्याशास्महे—

शृंगेरि आस्थानविद्वान्
के पि शंकरशास्त्री
"पण्डितप्रवर-पण्डितभूषण"
'विद्वन्मणि विद्याभूषण'
'पूर्वोत्तरमीमांसापारीण'
सांख्ययोगनिष्णात साहित्य
वेद वेदभाष्यविद्वान्
विनालाद्वैतवेदान्तप्रधानाध्यापक
श्रीचामराजेन्द्रसंस्कृतपाठशाला, बेंगलूर

## विषयानुक्रमणिका

श्री·

सुन्दरशास्त्रितनूज भाय शाब्दिकतिलक हरिहरमार्यम्
विद्याज्ञानविनम्र स्मर्यं नौमि पितामहमनुपममनिशम्



गोत्रमावरण्याव श्रुतिपरा योग्यानन्दनन्द पदम
पूर्णेन्दुनिगमार्गनिपुष्पमनोदाप्पामृगान् सुधी
धीमान भास्करालय स्वर्णचित्रैराद्यन्या महा–
मायानाटिकमारचय्य कुलगुरौ मन्नाथाय ददौ।

# ॐ नमो नारायणाय

"चत्वार्येतानि रत्नानि महाभारतसागरे
सहस्रनाम गीता च स्तवराजोऽह्यनुस्मृतिः"

इत्युक्त्या संसारसागरमग्नानां जनानामनायासेन तदुत्तरणोपायं दिदर्शयिषुः भगवान् पाराशर्यमुनिः महाभारतसागरेऽनुशासनिकपर्वणि रत्नवत् सारभूतं विष्णुसहस्रनामाख्यं मालामन्त्राणामुत्तमं मन्त्रं शरशयनगतेन भीष्मपितामहेन धर्मजायोपदिष्टप्रकारेणोपदिदेश—तत्र च धर्मजोऽपि भीष्मं प्रति तस्योपदेशप्रसञ्जकं प्रश्नमकार्षीदिति वैशम्पायनो जनमेजयमब्रवीदिति शौनकादीन् प्रति सूतवचनरूपमिदमादिमं वाक्यं वैशम्पायन उवाचेति—

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः
युधिष्ठिरश्शान्तनवं पुनरेवाभ्यभाषत। १

युधिष्ठिर उवाच :-

किमेकं दैवतं लोके किंवाप्येकं परायणम्
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम्। २

को धर्मः सर्वधर्माणां भवतः परमो मतः
किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात्। ३

श्रीभीष्म उवाचमुवाच :-

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम्
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः। ४

तमेव चार्चयन् नित्यं भक्त्या पुरुषमव्ययम्
ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च। ५

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम्
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत्। ६

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम्
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम्। ७

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा। ८

परमं यो महत्तेजः परमं यो महत्तपः
परमं यो महद्ब्रह्म परमं यः परायणम्। ९

पवित्राणां पवित्रं यो मंगळानां च मंगळम्
दैवतं देवतानां च भूतानां योऽव्ययः पिता। १०

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे
यस्मिंश्च प्रळयं यान्ति पुनरेव युगक्षये। ११

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते
विष्णोर्नामसहस्रं मे शृणु पापभयापहम्। १२

यानि नामानि गौणानि विख्यातानि महात्मनः
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये। १३

अस्य च सहस्रनाममालामन्त्रस्य ऋष्यादीनेवमाह :—

"ऋषिर्नाम्ना सहस्रस्य वेदव्यासो महामुनि
छन्दोनुष्टुप् तथा देवो भगवान् देवकीसुत ।
अमृतांशूद्भवो बीज शक्तिर्देवकिनन्दन
त्रिसामा हृदय तस्य शान्त्यर्थे विनियोजयेत्"।

अस्य नाम्ना सहस्रस्य वेदव्यासो महामुनि ऋषि । अनुष्टुप् छन्द तथा देवकी
सुतो भगवान् विष्णुर्देवो—देवता—अमृतांशूद्भव इति नाम बीज देवकीनन्दन
इति नाम शक्ति —त्रिसामेति नाम तस्य हृदयं। शान्त्यर्थे मोक्षार्थे जपे विनियोग—

## अथ ध्यानम् :-

क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकतैर्मौक्तिकाना
मालाक्लृप्तासनस्थ स्फटिकमणिनिभैर्मौक्तिकैर्मण्डिताग ।
शुभ्रैरभ्रैरदभ्रैरुपरि विरचितैर्मुक्तपीयूषवर्ष-
रानन्दी न. पुनीयादरिनलिनगदाशङ्खपाणिर्मुकुन्द ॥ १

भू पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाश्शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धि ।
अन्त स्थ यस्य विश्व सुरनरखगगोभोगिगन्धर्वदैत्यै-
श्चित्र रंरम्यते त त्रिभुवनवपुष विष्णुमीश नमामि ॥ २

शान्ताकार भुजगशयन पद्मनाभ सुरेश
विश्वाधार गगनसदृश मेघवर्ण शुभागम् ।
लक्ष्मीकान्त कमलनयन योगिहृद्ध्यानगम्य
वन्दे विष्णु भवभयहर सर्वलोकैकनाथम् ॥ ३

मेघश्याम पीतकौशेयवास
श्रीवत्साक कौस्तुभोद्भासिताङ्गम् ॥
पुण्योपेत पुण्डरीकायताक्ष
विष्णु वन्दे सर्वलोकैकनाथम् ॥ ४

नम समस्तभूताना आदिभूताय भूभृते
अनेकरूपरूपाय विष्णवे प्रभविष्णवे ॥ ५

सशङ्खचक्र सकिरीटकुण्डल
सपीतवस्त्र सरसीरुहेक्षणम् ।
सहारवक्षस्थलशोभि कौस्तुभ
नमामि विष्णु शिरसा चतुर्भुजम् ॥ ६

छायाया पारिजातस्य हेमसिंहासनोपरि
आसीनमम्बुदश्याममायताक्षमलकृतम् । ७

चन्द्रानन चतुर्बाहु श्रीवत्साङ्कितवक्षस
रुक्मिणीसत्यभामाभ्या सहित कृष्णमाश्रये । ८

अथ परिभाषा :-

विश्वंभर च विघ्नेश मत्तात जननीमपि
अस्मद्गुरून्शेषाश्च वाग्देवी ललिताम्बिकाम् ।
सहस्रनाम व्याख्यातॄन् भगवत्पादपूर्वकान्
नत्वा भक्त्याखिलान् वन्द्यान् कुर्वेऽज्ञोपि च कौतुकम् ।
विष्णोर्नामसहस्रस्य विवृति पद्यरूपत
कर्तु यत्नोह्यकारीति मयाऽज्ञेन न दूयते ।
सहस्रनामपीयूष पिबन् निर्वृतिमाप्नुयात्
यत् किंचिदर्थबोधेस्मिन् यत्नो नैव वृथा श्रम ।
एकैक नाम विवृत चैकैकश्लोकत क्रमात्
श्रीमत् शाकरभाष्योक्तरीत्यैवाम्नायनिर्णय ।
पुल्लिंगनाम्ना विष्णुश्च स्त्रीलिंगेनापि देवता
क्लीबनाम्ना विशेष्य च ब्रह्म चेत्युदित बुधै ।

हिरण्यगर्भ पुरुषो विधाता विक्रमीश्वर
केशव सवितादित्य पुष्कराक्षोऽनलोऽनिल
स्थविष्ठ कुमुद सिद्ध शिव सवत्सरोऽच्युत
सहिष्णुरनघोऽमोघ कृतज्ञो वेदविच्छुचि ।
अमेयात्मा वसुमनाश्चतुर्व्यूह प्रजापति
चतुरात्मा विश्वयोनिरनिर्देश्यवपुर्विभु ।
वीर सुवर्णोऽनिरुद्ध श्रीनिवास सता गति
गोविन्दो दुर्धर कान्तो निवृत्तात्मा महीधर ।
स्कन्दस्तार प्रभुर्भीम पावनो वायुवाहन
प्रमाण प्रणवो दक्ष कर्ता गहन उद्भव ।
गोप्ताऽदिदेव सर्वज्ञ पुण्योऽनन्तो वसुप्रद
गोपतिर्हुतभुक् चक्री शामोऽक्षोभ्योऽपराजित
अनिर्विण्णो महाकर्मा दामागोऽमितविक्रम
सुव्रत सुखद स्रष्टा शूर शौरि कृतागम ।
कृष्णश्चेति द्विरुक्ताना नाम्ना षट्भिश्च सप्तति
अजो भोक्ता पद्मनाभ सत्य प्राणश्च वीरहा
वासुदेवो वसुर्विष्णुर्माधवश्च त्रिवारत
प्रोक्तानि चतुरावृत्या श्रीमान् प्राणद इत्यपि ।

प्रज्ञायावृत्तनाम्ना च सख्या सापि च सयुता
दुग्धोदेरप्यनावृत्तैर्नाम्नामेव सहस्रकम् ।

"द्विरावृत्तनामानि पट्सप्तति ७६-त्रिरावृत्तिसख्या दश १० चतुरावृत्तिसख्ये द्वे चेति–७६+२०+६=१०२ आवृत्तनाम्ना सख्या प्रज्ञायेति = १०२ –अनावृत्तनाम्ना सख्या दुग्धोदेरिति ८९८ – इति सयोगात् सहस्रम् –८९८+१०२=१००० इति नाम्ना सहस्रम् ।

अकारादि ऋकारान्तै ए ओ औ दशभि स्वरै
कवर्गान्त्य चवर्गान्त्यौ द्वितीय तपयोरपि ।
टवर्गं च पळौ त्यक्त्वा व्यञ्जनैरवशेषितै
आरब्धानीह नामानि त्रयस्त्रिंशम्मिताक्षरै ।
श्रद्धा, दाने, गान, रत्न, सूनु, गानी खना बुनि
यत्नात्, कोनु, प्रभु, यनि, नीरे, याज्ञी, तपो, प्यनु ।
श्रेष्ठो, जह्वात् भोग, पात्र रागी, नासी, तप स्थल
प्रीतो, रुद्रो, प्यय, ज्ञेयो गीता, पेया, जनै क्रमात् ।
आदि क्षान्ताक्षराद्याना नाम्ना सख्याक्षरद्वयै
प्रोच्यते वादि साद्याना सख्या ज्ञानाय देशिक ।

| | | |
|---|---|---|
| अकारादिनाम-श्रद्धा = ९२ | खादि – याने = १ | बादि – तप = १६ |
| आ ,, – दाने = ८ | ग – नीरे = २० | भादि – स्थल = ३७ |
| इ ,, – गान = ३ | घ – याज्ञी = १ | मादि – प्रीत = ६२ |
| ई ,, – रत्न = २ | च – तप = १६ | यादि – रुद्र = २२ |
| उ ,, – सूनु = [redacted] | [redacted] – प्यनु = १ | रादि – प्यय = ११ |
| ऊ ,, – गानी = ३ | जा – श्रेष्ठ = २२ | लादि – ज्ञेय = १० |
| ऋ ,, – खना = २ | त – जह्वात् = १८ | शादि – गीता = ६३ |
| ए ,, – बुनि = ३ | द – भोग = ३४ | हादि – पेया = ११ |
| ओ ,, – यत्नात् = १ | ध – पात्र = २१ | क्षादि – जनै = ८ |
| औ ,, – कोनु = १ | न – रागी = ३२ | वादि – ज्ञानाय = १०० |
| क ,, – प्रभु = ४२ | प – नासी = ७० | सादि – देशिक = १५८ |
| १६४ + | २३६ + | ४९८ |

१६४ + २३६ + ४९८ = ८९८ अनावृत्तिनामानि, आवृत्तिनाम्ना सख्या १०२ इति आहृत्य सहस्रम् ।

अथ नाम्ना शतकानामाद्यन्त क्रमेणाह–

विश्वाद्यमच्युतान्त स्यात् नाम्ना शतकमादिम
वृषाकपिर्द्वितीयाद्य सर्वदृक् सिंह चान्तिम ।
सन्धाताद्य तृतीय स्यादन्त्य तस्य युगादिकृत्
युगावर्त्तश्चतुर्थाद्यमनयश्चान्त्यमीरित ।
वीरो भोक्ता चाद्यमन्त्य पञ्चमस्य क्रमात् स्मृत
कपीन्द्रश्च शिवोपि स्यात् षष्ठस्याद्य तथान्तिम ।
श्रीवत्सवक्षाश्चाद्य स्यात् सप्तमेन्त्य तु सत्कृति
सत्ता सुवर्ण बिन्दु स्यादष्टमस्याद्यमन्तिमम् ।।
अक्षोभ्याद्यप्ययान्त स्यात् नवम दशमे तथा
स्वस्तिदश्चाद्यमन्त्य स्यात् सर्वप्रहरणायुध –

ॐ

विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः
भूतकृत्भूतभृत् भावो भूतात्मा भूतभावनः। १४

श्लोक भाष्यम् :-

सृष्ट्वादौ माययास्मिन् जगति स विशति स्वात्मनैवेति विश्व
काले ऽस्मिन्नेव सर्वं जगदभिविशतीत्येव विश्व विशेषात्।
विश्व तत्कार्यजात सकलमपि च तत् कारण ब्रह्म साक्षात्
विश्व कर्त्तापि भोक्ता भवति तदखिल ब्रह्म विश्व समस्तम् ॥ १

विष्णुर्वेवेष्टि चान्तर्बहिरपि जगत सर्वतो व्याप्य सस्य
व्याप्नोतात्यस्य कान्त्या विशति सकल ओ सत्सदित्येव विष्णु।
विष्णोर्नान्यच्च यस्मात् श्रुतिगतपुरुषो य सहस्राक्षशीर्षा
मालान्नारायणोऽसौ निगमनिगदितो यज्ञमूर्त्ति स विष्णु ॥ २

टिप्पणीः-

१ विश्वस्य जगत कारणत्वेन विश्वमिति ब्रह्म उच्यते-आदौ कार्यभूतविश्वशब्देन कारणग्रहण कार्यभूतविरिच्यादिभिरपि विष्णो स्तुत्यता प्रदर्शयितु-विश्वस्य कारण विश्व ब्रह्म "ब्रह्मैवेद विश्व" "पुरुष एवेद विश्व" "विश्वमेवेद" इत्यादि श्रुतिभ्य तत्भिन्न न किञ्चिदपि परमार्थत सदस्तीति विश्व समस्त कार्यजात ब्रह्मैव-तत् सृष्ट्वा तदेवानुप्राविशत इति कार्यभूतमेव सकल जगत् जीवात्मना विशतीति विश्व "यत् प्रयन्त्यभिसविशन्तीति" श्रुत्या प्रळये विश्वानि भूतानि अस्मिन् विशन्तीति विश्व-कारणात्मा कार्येषु विशति, कार्याणि सकलान्यपि कारणे विशन्तीत्युभयथा विश्व ब्रह्मैव। तथा कारणस्वरूप, कार्यस्वरूप,च-इति कर्त्ता, कारण, करण कार्य चेति चतुर्ष्वप्यर्थेषु विश प्रवेशन इति धातो कर्त्तर्यधिकरणे वा उणादि सूत्रेण क्वन् प्रत्यय–अस्य च ब्रह्म विशेषणत्वात क्लीबत्व कृत्स्नार्थत्व निमित्तीकृत्य भगवन् नामत्वोपपादनमिति सर्वनामत्वस्यैवौचित्यात् सर्वनामशब्द तथा चतुर्थ्यन्त ओ विश्वस्मै नम।

२ विश्व किमित्याकाक्षायामाह विष्णुरिति–विषेर्व्याप्त्यभिधायिनो नुप्रत्ययान्तस्य रूप विष्णु –विशतेर्वानुक्प्रत्ययान्तस्य रूप वा देशकालवस्तुपरिच्छेद शून्य इत्यर्थ इति शाकरभाष्ये-विष्णवे नम

यज्ञस्वरूपाय वषट् क्रिया यत्
यस्मिंश्च तत्स्यात् हविष प्रदान ।
मनुर्वषट्कार इतीह विष्णु
र्मन्त्राधिदेवोऽपि च मन्त्रमूर्त्ति ॥ ३

भूतानि भव्यानि भवन्ति चैषा
कालस्य भेदेन स कालरूपी ।
प्रभु प्रभावादिति भूतभव्य–
भवत् प्रभुर्विष्णुरमेयधामा ॥ ४

भूतानि जातानि भवन्ति यानि ब्रह्मात्मना तानि करोति काले ।
रुद्रात्मना कृन्तति चेति भूतकृत् रजस्तमश्चाश्रितवानलिप्त ॥ ५

बिभर्ति तान्येव हि भूतभृच्च सत्वात्मक पालनपोषणार्थम् ।
ब्रह्मा हरश्चेति हरि स विष्णु कार्यार्थमेको विविधस्वरूप ॥ ६

प्रपञ्चरूपेण च केवल वा जन्माद्ययुक्तो भवतीति भाव ।
सत्तात्मको भाव इति प्रसिद्ध्या स सच्चिदानन्दमय परात्मा ॥ ७

असत्यात्मा स भूताना सातत्यगमनात्मक ।
अन्तर्यामीति भूतात्मा विश्वव्यापितया स्मृत ॥ ८

---

टि:–

३ वषट् हविर्दान क्रियत इति वषट्कार कृञ् धातो अकर्तरि च कारके सज्ञाया मिति सम्प्रदाने अधिकरणे करणे वा घञ् इतिकार यस्मै यस्मिन् वा वषट् क्रियत इत्युभावपि वषट्कारो – वषट्कारमन्त्रात्मा तद्देवतास्वरूपो वा वषट्कार – वषट्काराय नम

४ कालभेदमनादृत्य सन्मात्रप्रतियोगिकमैश्वर्यं तस्येति प्रभुत्वमिति भाष्ये – भूतभव्यभवत्प्रभवे नम ।

५ रजोगुण समाश्रित्य विरिञ्चिरूपेण भूतानि करोतीति भूतकृत् तमोगुणमास्थाय रुद्रात्मना भूतानि कृन्ततीति, कृणोतीति वा हिनस्तीति भूतकृत्–भूतकृते नम ।

६ सत्वगुणमधिष्ठाय भूतानि बिभर्ति धारयति पालयति, पोषयतीत्यपि भूतभृत् – भूतभृते नम

७ प्रपञ्चरूपेण वा केवल वा भवतीति भाव – भवतीति भाव – भवन सत्तात्मको वा- भावाय नम

८ भूताना ब्रह्मादि स्थावरान्तानां आत्मा अन्तर्यामीति भूतात्मा- भूतात्मने नम

आसीत् पुरेति पुरुष स पुरे शयान
पूर्णो ददाति स पुरूणि महत्फलानि ।
अन्ते हिनस्ति भुवन स्यति य पुरूणि
सर्गस्थितिप्रलयकृत् पुरुष पुराण ॥ १४

साक्षादव्यवधानेन सर्वं पश्यति सर्वदा
सर्वज्ञो य सहस्राक्ष साक्षी स पुरुष स्मृत । १५

जानाति य क्षेत्रमिद क्षमात्मक
क्षेत्रज्ञ आत्मा स तु जीवसज्ञ ।
न चाक्षरोऽनश्वर एव चात्मा
तयोरभेद श्रुतिसिद्ध एव ॥ १६

**योगो योगविदां नेता प्रधानपुरुषेश्वरः**
**नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ।** १६

श्लो० भा० :–

समाधौ युज भावेत्र योगस्तु तदवाप्यता
एवत्वभावना योगो जीवात्मपरमात्मनो । १७

---

टि:–

१४ अस्तेर्व्यत्यस्ताक्षरयोगात् आसीत् पुरा पूर्वमेवेति विग्रह कृत्वा व्युत्पादित
श्रुते पुरे शेत इति पुरुष
[illegible] त्मा यत् तस्मात् पुरुष
, पुरूणि सनोति ददाति
वा पुरूणि सहारे स्यति नाशयतीति वा पुरुष । पुरुषाय नम ।

१५ साक्षात् द्रष्टरि सज्ञायामितीनि – साक्षिणे नम ।

१६ *क्षि क्षये कर्तरि ष्ट्रन्निति क्षयति नश्यतीति क्षेत्र शरीर जानातीति क्षेत्रज्ञो* जीवात्मा न च क्षरतीति क्षर जीवात्मा-क्षरादन्य अक्षर । यद्वा अश्नुते व्याप्नोतीति अक्षर परमात्मा– क्षेत्रज्ञोऽक्षर एवेति एवकारेण ययोरभेद पारमार्थिक इति द्योत्यते चकारात् व्यावहारिको भेद न पारमार्थिक इति च द्योत्यते इति भाष्योक्त्या पदयोरनयोरेकनामत्व तथा– क्षेत्रज्ञाय अक्षराय नम ।

१७ योगोऽवाप्यता योग – योगाय नम ।

योगं विदन्ति जानन्ति सम्यक् योगविदस्तु ये
तेषां योगविदां नेता प्रापक परमं पदम् ॥ १८

प्रधानं प्रकृतिर्माया जीवस्तु पुरुषस्तयो
ईश्वर परमात्मासौ प्रधानपुरुषेश्वर । १९

नरस्याधो वपुश्चास्य सिंहस्योर्ध्ववपुस्तथा
नारसिंह वपुर्यस्य नारसिंहवपु स्मृत । २०

श्रयतीति हरिं या श्रीर्नित्यं वक्षसि संस्थिता
नित्ययोगे मतुप् श्रीमान् नानारूपधरोप्यसौ। २१

कं ब्रह्मापि च विष्णुरस्तु गिरिशोऽपीशश्च केशास्त्रय
केशा यस्य वशा स केशव इति ख्यातस्त्रिमूर्त्यात्मिक ।
केशी चाप्यवतीति वा स हतवान् य केशिनं दानवं
केशा वास्य मनोहराभिरुचिरा ध्येय सदा केशव ॥ २२

पुरुषाणामुत्तम श्रेष्ठ पुरुषेषूत्तमोऽपि वा
अक्षरादुत्तमश्चेति प्रथित पुरुषोत्तम । २३

---

टिः-

१८ योगक्षेमवहनादिना योगविदां नेता - "तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं" इति भगवद्वचनात्- योगविदां नेत्रे नम ।

१९ प्रधानं प्रकृति पुरुषो जीव तयोरीश्वर प्रधानपुरुषेश्वर परमात्मा प्रधानपुरुषेश्वराय नम ।

२० नारसिंहवपुषे नम ।

२१ चोरूपधरस्याप्यस्य श्रियो हानिर्नेवेत्याह श्रीमान् श्रीमते नम ।

२२ कश्च अश्च ईशश्च केशास्त्रिमूर्तय ते यस्य वशा स केशव कश्च ईशश्च केशौ ताववतीति केशव वध हिंसायां इति धातो केशिनं हतवानिति केशव पृषोदरादित्वात् साधुत्वकल्पना- केशाद्वोऽन्यतरस्यां इति वप्रत्यय प्रशस्ता- केशवाय नम ।

२३ "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तम अतोऽस्मि लोके वेदे च प्रथित पुरुषोत्तम" इति भगवद्वचनात्- पुरुषोत्तमाय नम ।

सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः
संभवो भावनो भर्ता प्रभवः प्रभुरीश्वरः। १७

श्लो० भा० :-

सर्वकृत् सर्वभृत् सर्व सर्वज्ञ सर्वकारण
सर्वात्मा स हरि सर्व सर्व विष्णुमय जगत्। २४

पापौघमिह भक्ताना दुष्टाश्च जगत सदा
शृणाति सर्व सहारे शर्व स हरिरच्युत । २५

निस्त्रैगुण्यात् विशुद्धत्वात् शिव सर्वशिवकर
निर्गुण परमात्मासौ विष्णुरेव सदाशिव । २६

स्थाणुर्हरस्तु सज्ञाया स्थिरत्वात् स्थाणुरेव वा
हरश्च हरिरेवेति स्थाणु स हरिरच्युत । २७

भूतानि वियदादीनि क्ष्मादादीयते यत
भूतानामादिभूतत्वात् भूतादि स हरि स्मृत । २८

सर्व निधीयते यस्मिन् प्रलये स निधि स्मृत
अव्ययोऽनश्वरश्चेति विष्णु स निधिरव्यय । २९

---

टि -

२४ 'असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् सर्वस्य सर्वदाज्ञानात् - सर्वमेन प्रचक्षते" इति भगवद्व्यासवचनात्– सर्वस्मै नम ।

२५ शर्वाय नम

२६ "स ब्रह्मा स शिव" इत्यभेदोपदेशात् शिवादिनामभिर्हरिरेव स्तूयते– शिवाय नम ।

२७ स्थिरत्वात् स्थाणु – स्थाणवे नम ।

२८ भूतानामादिकारणत्वात् भूतादि – भूतादये नम ।

२९ कर्मण्यधिकरणे च इति कि प्रत्यय – अव्ययश्च निधेर्विशेषण – तथापि "निधये अव्ययाय नम" इत्येव चतुर्थ्यंत सम्प्रदाय ।

धर्मसंस्थापनार्थाय संभवामीति चोक्तित
स्वेच्छया स महाविष्णुः सम्यक् भवति संभव । ३०

यो भावयति भोक्तॄणां ददाति च फलान्यपि
भावन सर्वफलदो भक्तानां वाञ्छितार्थद । ३१

अधिष्ठानतया भर्ता प्रपञ्चभरणादसौ
धारणात् पोषणाच्चापि भर्ता सर्वपतिर्हरिः । ३२

प्रकर्षेण भवन्त्यस्मात् सर्वभूतान्यशेषत
भवो जन्म प्रकृष्टोस्य प्रभवो धर्मरक्षणात् । ३३

अकर्तुमन्यथाकर्तुं कर्तुं सर्वमपीच्छया
सामर्थ्यातिशयान्नून प्रभुर्नारायण स्मृत । ३४

निरुपाधिकमैश्वर्यं सर्वमस्यास्ति तन्मय
एक सर्वेश्वर श्रुत्या चेशित्वादीश्वरो हरिः । ३५

स्वयंभूः शंभुरादित्यः पुष्कराक्षो महास्वनः
अनादिनिधनो धाता विधाता धातुरुत्तमः। १८

---

टिः-

३० स्वेच्छया समीचीन भवनमस्येति संभव "अथ दुष्टविनाशाय साधूना रक्षणाय च स्वेच्छया संभवाम्येव गर्भ दुःखविवर्जित" इति भगवद्वचनात्-संभवाय नमः ।

३१ भावनाय नमः ।

३२ प्रपञ्चस्याधिष्ठानत्वेन भरणात् भर्ता भर्त्रे नम -

३३ प्रभवाय नमः

३४ सर्वक्रियासु सामर्थ्यातिशयात् प्रभु - प्रभवे नम.

३५ निरुपाधिकमैश्वर्यमस्यतीश्वर ईशित्वादिति ईशित्वाद्यष्टसिद्धयो लक्षिता यथा "अणिमा महिमा लघुवी गरिमा प्राप्तिरीशिता प्राकाम्यश्च वशित्वञ्च यत्र कामा परागता" इति-ईश्वराय नमः ।

स एष स्वयमुद्भभावविति मनोरक्त्या स्वयभूर्हरि
सर्वेषामुपरि स्वय भवति च स्वेच्छानुसारेण स ।
यो येषामुपरीति मन्त्रपरिभूवर्णात् स्वयभूरपि
स्वातन्त्र्यात् परमेश्वर स भगवान् विष्णु स्वयभू स्मृत ॥ ३६

श भावयति भक्तानामिति शभु सुखप्रद
भुक्तिदो मुक्तिदश्चासौ शभुर्नारायण स्मृत । ३७

आदित्यो ऽदितिनाथ एव स हरिर्यो ऽखण्डपृथ्वीपति
यद्वा वामन एव चादितिसुतो यो मण्डलस्योपि वा ।
आदित्य प्रतिभासतेऽबुनि यथा चैकोप्यनेकात्मक
सादृश्यादुपचारत स भगवानादित्य इत्यादृत ॥ ३८

विषमानदनुतेह्यक्षि जले पुष्यति पुष्कर
पद्म तत् पुष्कराक्षोऽस्य पुष्करोपमिताक्षिणी । ३९

महान् पूज्यतमश्चासौ स्वन शब्द श्रुतिस्तथा
महास्वन स वेदात्मा मेघगम्भीरनिस्वन । ४०

---

टि:-

३६ "पराञ्चि खानि व्यतृणत् स्वयभू" इति मन्त्रवर्णनात् स्वयभू परमेश्वर स्वय मेव स्वतन्त्रो भवति न परतन्त्र इति- स्वयभुवे नम ।

३७ श भावयति भक्तानामिति शभु - शभवे नम ।

३८ अदितेरखण्डिताया मह्या पतिरित्यादित्य "मही देवी विष्णुपत्नी" इति श्रुते । अदित्या काश्यपपत्न्या पुत्रो वामनश्चेन्द्रानुजश्चादित्य "आदित्यानामह विष्णु" इत्युक्त्या आदित्यमण्डलान्तस्थो हिरण्मय पुरुषो वा- आदित्याय नम ।

३९ पुष्करेणोपमिते अक्षिणी अस्येति पुष्कराक्ष - पुष्कराक्षाय नम ।

४० अस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदो यजुर्वेद - इति श्रुते - महास्वनाय नम ।

आदिर्जन्म विनाश च निधन यस्य नास्ति स
अनादिनिधनो नित्यश्चाद्यन्तरहितो हरि । ४१

अनन्तादिस्वरूपेण विश्वधारणपोषणात्
धाता धाञ्यस्तृचा योसौ दधाति सकल जगत् । ४२

विशेषेण दधातीति विधाता सर्वकर्मकृत्
फलानामपि कर्त्तासौ योनन्तादीन् दधात्यपि । ४३

धातुर्विरिञ्चादुत्कृष्टश्चोत्तमो धातुरुत्तम.
धातुश्चासावुत्तमश्च चिद्रूपश्चोत्तमो हरि । ४४

## अप्रमेयो हृषीकेशः पद्मनाभो ऽमरप्रभुः
## विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः। १६

श्लो० भा०:-

प्रमातु सर्वथाऽविषय प्रत्यक्षादिप्रमाणत
अप्रमेय साक्षिरूपो नावगम्यो हरिश्च स । ४५

हृषीकेशश्चेन्द्रियाणामीशो वा स्ववशेन्द्रिय
सूर्यचन्द्रात्मनो यस्य हृष्टा केशास्तु रश्मय । ४६

---

टि:-

४१ अनादिनिधनाय नम ४२ धात्रे नम ४३ विधात्रे नम

४४ धातुरुत्तम इति एव नाम सामानाधिकरण्येन धातव उत्तमाय नम वैयधिकरण्येन च धातुरुत्तमाय नम इति चतुर्थ्यन्तम।

४५ शब्दादिरहितत्वाच्च प्रत्यक्षगम्य नाप्यनुमानगम्य तद्व्याप्तलिङ्गाभावात नाप्युपमानसिद्ध निर्भागत्वेन सादृश्याभावात् नाप्यर्थापत्तिग्राह्य तद्विनानुपपद्यमानस्याभवात् नाप्यभावगोचर भावरूपत्वात् अभावसाक्षित्वाच्च नापि शास्त्रप्रमाणवेद्य प्रमाणजन्यातिशयाभावात् - यद्येव शास्त्रयोनित्व मथ ? उच्यते–प्रमाणादि साक्षित्वेन प्रकाशस्वरूपस्य प्रमाणाविषयत्वेपि अध्यस्तातद्रूपनिवर्तकत्वेन शास्त्रप्रमाणकत्वमिति अप्रमेय साक्षिरूपत्वादिति भाष्य- अप्रमेयाय नम ।

४६ "सूर्यरश्मिर्हरिकेश पुरस्तात्" इति श्रुते- हृषीकेशाय नम

पद्मनाभोऽस्ति यन्नाभौ पद्म तद्विश्वकारण
"अजस्य नाभावध्येकमर्पित" श्रुतिकीर्तनात् । ४७

म्रियते न तु ये प्रोक्तास्ते देवाश्चामरा अपि
अमराणा प्रभु स्वामी हरिश्चेत्यमरप्रभु । ४८

विश्वकर्मा यस्य विश्व कर्म कार्यं क्रियाथवा
सादृश्याद्वा विश्वकर्मा त्वष्ट्रा निर्माणकौशलात् । ४९

मन्यते चिन्त्यते चेति मनुर्मन्त्रात्मकोपि वा
मनु प्रजापतिर्मन्ता नान्योऽतोऽस्तीति च श्रुते । ५०

तनूकरोति यस्त्वष्टा ष्टुत्वाच्च त्वक्षते स्तृच
सर्वभूतानि सहारे यस्मिन् यत् प्रविलीयते । ५१

सर्वातिशयसस्थूल स्थविष्ठार्थं प्रकीर्त्तित
विराडात्मा स्थविष्ठोऽसौ विष्णुरन्वर्थनामक । ५२

पुराण स्थविरो वृद्ध स्थिरत्वाच्च ध्रुवोपि च
स चादिपुरुषो विष्णुर्विश्रुत स्थविरो ध्रुव । ५३

**अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः**
**प्रभूतस्त्रिककुब्धाम पवित्रं मंगलं परम् ।** २०

---

टि.-

४७ पद्मनाभाय नम

४८ अमरप्रभवे नम

४९ विश्वकर्मणे नम

५० मनवे नम

५१ त्वक्षतेस्तनूकरणार्थात् तृच् प्रत्ययस्य ष्टुत्वात् त्वष्टा- त्वष्ट्रे नम

५२ स्थविष्ठाय नम

५३ ("त्वेर ह्रस्य स्थविरस्य नाम" वह्नि.चा वयोवचनो वा इति भाष्ये) स्थविरो ध्रुव इत्येषं नाम सविशेषण- स्थविराय ध्रुवाय नम

श्लो० भा०: -

"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"
इति श्रुत्या स चाप्यग्राह्यो गृह्यते यो न चेन्द्रियैः । ५४

शश्वत् सर्वेषु कालेषु भवतीति च शाश्वत
नित्यस्तु बहुधा श्रुत्या "शाश्वत शिवमच्युतम्" ॥ ५५

कृष्ण पापापहारी जगदघहरणात् कर्षणार्यात् कृषेर्वा
सत्तार्थत्वाच्च धातो सदपि च भगवान् णार्थतो निर्वृतात्मा ।
कृष्णस्तद्भावयोगात् भवति च परम सच्चिदानन्दरूप
कृष्णो वर्णोऽस्य यस्मादपि च निगदित श्यामवर्णो मनोज्ञ ॥ ५६

लोहिते चाक्षिणी यस्य लोहिताक्ष कृपारुण
"समावृषभ" इत्यादि लोहिताक्षोऽपि च श्रुते । ५७

प्रतर्दति हिनस्तीति सर्वभूतानि सहृतौ
प्रतर्दन स भगवान् दुष्टशिक्षणतत्पर । ५८

प्रभूतगुणवानेव प्रभूतो दोषवर्जित
ज्ञानैश्वर्यादिभि सर्वैर्गुणै सम्पन्न ईश्वर । ५९

ऊर्ध्वाधो मध्यलोकाना तिसृणा ककुभामपि
धाम स्थानमिति प्रोक्तस्त्रिककुब्धाम विश्रुत । ६०

शुद्धयत्यनेन मन्त्रात्मा य शोधयति देवता
पुनाति येन वा यो वा पवित्रमुभयात्मकम् । ६१

---

टि:-

५४ अग्राह्याय नम

५५ शाश्वत सच्चिदानन्दात्मक – शाश्वताय नम[1]

५६ "कृषिर्भूवाचक शब्दो णश्च निर्वृति वाचक विष्णुस्तद्भावयोगाच्च कृष्णो भवति शाश्वत" इति व्यासवचनात्- कृष्णो वर्णश्च मे यस्मात् तस्मात् कृष्णोऽहमर्जुन" इति भगवद्वचनाच्च- कृष्णाय नम

५७ "समावृषभो लोहिताक्ष" इति श्रुते – लोहिताक्षाय नम

५८ प्रतर्दनाय नम ५९ प्रभूताय नम

६० त्रिककुब्धाम इत्येत नाम– त्रिककुब्धाम्ने नम

६१ पुव सज्ञायां कर्तरि चर्षिदेवतयोरिति पाणिनिस्मरणात् इत्रप्रत्यय –पवित्राय नम

अशुभानि निहन्तीति शुभानि वितनोति च
मगल तत् स्मृत पुसा ब्रह्म तच्चेह कीर्त्तितम् । ६२

सर्वभूतेभ्य उत्कृष्ट पर ब्रह्म च धाम च
दिक्कालाद्यनवच्छिन्न पर ब्रह्म इति श्रुतम् । ६३

## ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः
## हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः । २१

श्लो० भा० :-

नियन्ता सर्वभूतानामीशान शानचा लट
ईशेश्च वेदविदित सर्वभूतमहेश्वर । ६४

ददाति खण्डयति प्राणान् शोधयत्यपि दापनात्
चेष्टयत्यपि वा दाति प्राणदो बहुधा श्रुत ६५

प्राणितीत्यपि च प्राण क्षेत्रज्ञोऽक्षर एव च
मुख्यप्राणोथवा श्रुत्या "प्राणस्य प्राण" इत्यपि । ६६

ज्याधिकारे तु वृद्धस्य ज्येष्ठो वृद्धतम स्मृत
कारणत्वाच्च सर्वेषा सर्वातिशयनादपि । ६७

---

टि:-

६२ कल्याणरूपत्वाद्वा मगल- मगल परमित्येकमिद नाम सविशेषणमिति भाष्ये- तथापि केरले पृथङ्नाम गृह्यते- क्षेत्रज्ञोक्षर इत्येकनामत्व ग्रहणेऽत्र पृथङ्नामग्रहणमवश्य- तदैव शततम नाम अच्युतो भवति मगल परमित्येक नामस्वीकारे क्षेत्रज्ञ अक्षर इति पृथक् नामत्वेन ग्राह्य- मगलाय नम एकनामत्वपक्षे — मगलाय परस्मै नम

६३ परस्मै नम

६४ ईशानाय नम

६५ "कोह्येवान्यात् क प्राण्यात्" इति श्रुते — प्राणदाय नम

६६ प्राणाय नम

६७ ज्येष्ठो वृद्धतम सर्वेषां कारणत्वाद्वा ज्येष्ठ — ज्येष्ठाय नम

सर्वातिशायी श्रेष्ठोऽसौ य प्रशस्यतम श्रुत
"प्राणो वावादि" वाक्येन मुख्यप्राणोपि वा पर । ६८

प्रादुर्भावात् प्रजासज्ञा पाति रक्षति य पति
प्रजापतिस्तु सर्वासा प्रजाना पतिरीश्वर । ६९

गीर्यतेऽन्तर्धीयते यो गर्भ कुक्षिगतस्तथा
हिरण्यगर्भो ब्रह्मासौ य स्थितोऽण्डे हिरण्मये। ७०

सर्वाण्यस्या भवन्तीति भूश्च विश्वभराभिधा
सा गर्भे यस्य भूगर्भो भूपतिर्विश्वकारण । ७१

माया धव श्रियश्चेशो माधवो मधुविद्यया
मौनात् ध्यानात् च योगाच्च वेद्यत्वान्माधव स्मृत । ७२

असुर मधुनामानमेष सूदितवानिति
विख्यातस्त्रिषु लोकेष माधवो मधुसूदन । ७३

## ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः
## अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान्। २२

श्लो० भा०:-

ईशश्च वरश्च प्रोक्तश्चेशित्वाद्यष्टसिद्धिद
ईश्वरोपि श्रुतश्चासौ सर्वत सर्वशक्तिमान्। ७४

---

टि:-

६८ सर्वातिशयनाद्वा श्रेष्ठ— श्रेष्ठाय नम
६९ प्रजापतये नम ७० "हिरण्यगर्भ समवर्तताग्रे 'इतिश्रुति –हिरण्यगर्भाय नम
७१ भू गर्भे यस्य स भूगर्भ – भूगर्भाय नम
७२ "मौनात् ध्यानाच्च योगाच्च विद्धि भारत माधव" इति व्यासवचनात् —माधवाय नम
७३ "कर्णमिश्रोद्भव चापि मधुनाममहासुर ब्रह्मणोपचितिं कुर्वन् जघान पुरुषोत्तम तस्य तात ववादेव दवदानवमानवा मधुसूदन इत्याहु ऋषयश्च जनार्दनम्" इति महाभारते – मधुसूदनाय नम
७४ सर्व शक्तिमत्तया ईश्वर – ईश्वराय नम

विक्रम शौर्यमस्यास्ति विशेषेणेति विक्रमी
त्रिविक्रमो वामनोपि विश्रुतो विक्रमीति स । ७५

विध्यत्यनेनेति धन्वा धनुस्तेनान्वितो हरि
धन्वीति गीत स्वेनैव "राम शस्त्रभृतामहम्" । ७६

मेधा धीस्तु समर्था या सर्वग्रन्थार्थधारणे
साऽस्यास्तीति मेधावी विश्रुतोऽमितबुद्धिमान् । ७७

विचक्राम जगच्चेति विक्रमो विश्वविक्रमात्
विनाक्रामश्च गन्तेति विक्रम पक्षिवाहन । ७८

चक्रमे विश्वमखिल क्रम क्रान्तोपि विश्रुत
क्रमोऽसौ क्रमहेतुत्वात् भक्ताना स्वपद प्रति । ७९

सर्वेषामुत्तमो यस्मात् नास्त्यस्मादुत्तमोऽपर
सर्वथा प्रथितश्चाथ सर्वोत्कृष्टोप्यनुत्तम । ८०

दैत्यादिभिर्धर्षयितु कृच्छ्रेणापि न शक्यते
दुराधर्षोऽभिमतिु दुस्सहश्चेति कीर्तित । ८१

साक्षीति प्राणिना सर्व पुण्यापुण्यात्मक कृत
जानातीत्यकृतश्चोऽसौ कृतज्ञ परिकीर्तित । ८२

कृतिस्वरूप सर्वात्मा क्रियाधारतयापि वा
क्रियाकर्तृस्वरूपेण देवतात्र कृति स्मृता । ८३

---

टि.-

७५ विक्रमिणे नम
७६ धनुरस्यास्तीति धन्वी "श्रीहादिरवाधिनि" धन्विने नम
७७ मेधाविने नम ७८ विना पक्षिणा गरुडेन क्रमाद्वा विक्रम गरुडवाहन —विक्रमाय नम
७९ "क्रान्ते विष्णु" इति मनुवचनात्— क्रमाय नम
८० "यस्मात् पर नापरमस्ति किञ्चित्" इति श्रुते "न त्वत्समोस्त्यभ्यधिक कुतोऽन्य" इति स्मृतेश्च— अनुत्तमाय नम
८१ दुराधर्षाय नम
८२ पत्रपुष्पाद्यल्पमपि प्रयच्छता मोक्ष ददातीति वा— कृतज्ञाय नम
८३ पुरुषप्रयत्न कृति क्रिया वा— कृत्यै नम

आत्मनो महिमा योऽस्य नित्यमस्तीति चात्मवान्
सर्वात्मा परमात्मासौ नित्ययोगेन चात्मवान् । ८४

सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः २३
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ।

श्लो० भा० :–

सुरा शोभनदातारो देवाश्चैश्वर्यदीप्तित
तेषामीश सुरेशोऽसौ विख्यातोऽमितवैभव । ८५

शृणात्यार्त्ति हिनस्तीति शरण रक्षितेति स
आर्त्तानाम् आर्त्तिहरणात् शरण्य शरण स्मृत । ८६

शृणाति दुःख शर्मेति सुख वा तत्स्वरूपत
परमानन्दरूपोऽसौ सर्वसौख्यप्रद स्मृत । ८७

विश्व रेतो यस्य वीर्यं विश्वरेताश्च स स्मृत
विश्वहेतुर्मनूक्तिश्च "तासु वीर्यमवासृजत् । ८८

प्रजनेरुपसर्गाच्च सज्ञायामिति च प्रजा
प्रजाना च भवो जन्म यत्सकाशात् प्रजाभव । ८९

प्रकाश न जहातीनि प्रोक्तश्चाह स्वरूपत
तस्मादरूपात् प्रकाशात्मा विष्णुश्चाह प्रकीर्तित । ९०

ऋतव सवसन्त्यस्मिन्निति सवत्सर स्तथा
कालात्मत्वात् स भगवान् विष्णु सवत्सर स्मृत । ९१

---

टि:-

८४ "स भगव कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति" श्रुते –आत्मवते नम
८५ सुरेशाय नम ८६ शरणाय नम ८७ शर्मणे नम
८८ विश्वस्य कारणत्वात् विश्वरेता – विश्वरेतसे नम
८९ प्रजाभवाय नम
९० प्रकाशरूपत्वादह – अह्ने नम ९१ कालात्मनावस्थितो विष्णु सवत्सर इत्युक्त – सवत्सराय नमः

व्यालो दुष्टगज सर्प सिंहादिर्दुर्ग्रहो मृग
अशक्यश्च गृहीतु यो व्यालवत् व्याल एव स । ९२

प्रतीति प्रत्यय प्रज्ञा प्रत्ययस्तत्स्वरूपत
ज्ञानात्मा विष्णुरेवोक्त "प्रज्ञान ब्रह्म च श्रुते । ९३

दर्शनानि च सर्वाणि यस्यासौ सर्वदर्शन
"सर्वात्मा सर्वतश्चक्षुर्विश्वाक्ष" मिति च श्रुते । ९४

## अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः
## वृषाकपिरमेयात्मा सर्वयोगविनिस्सृतः । २४

श्लो० भा०:-

जायते नैव चाजोसौ न जातो न जनिष्यते
इत्यादिविश्रुतो नित्यो जन्ममृत्युजरातिग । ९५

सर्वेश्वर स सर्वेषामीश्वराणामपीश्वर
"एष सर्वेश्वर" श्रुत्या साक्षान्नारायणो हरि । ९६

गत्यर्थो मङ्गलार्थश्च निष्पत्त्यर्थं षिधोरिति
नित्यनिष्पन्नरूपत्वात् सिद्ध स परिकीर्तित । ९७

सर्वसवित्स्वरूपश्च सर्वोत्कृष्टफलात्मक
विष्णुश्च सिद्धिरित्युक्तस्तादात्म्यादुपचारत । ९८

---

टि :-

९२ व्यालवत् ग्रहीतुमशक्यत्वात् व्याल – व्यालाय नम

९३ प्रत्ययाय नम ९४ सर्वात्मकत्वात् सर्वदर्शन – सर्वदर्शनाय नम

९५ "नहि जातो न जायेऽहं न जनिष्ये कदाचन क्षेत्रज्ञ सर्वभूतानां तस्मादहमज स्मृत" इति भगवद्वचनात्- अजाय नम

९६ सर्वेश्वराय नम

९७ षिधोरिति षिधु गत्यां षिधुशास्त्रे मङ्गल्ये च, षिधु निष्पत्तौ गत्यर्थाकर्मके इति वर्तते क्त यस्य विज्ञानैश्वर्यनित्यत्व- सिद्धाय नम

९८ निरतिशयफलरूपत्वात् सिद्धि – सिद्ध्यै नम

आदि कारणमित्यत्र सर्वेषामादिरित्यत
सर्वादि परम प्रोक्त सर्वभूतादिकारणम् । ९९

यस्य स्वरूपसामर्थ्यान्च्युत नाशो न विद्यते
अच्युतो विश्रुत सोऽय "शाश्वत शिवमच्युत" १००

धर्मो वृषो वर्षति यो हि कामान्
शब्दवुनोऽपाश्च नपि क्षिति यत् ।
वराहरूपेण च विश्रुतोसौ
वृषाकपिश्चेत्युभयस्वरूपान् ॥ १०१

आत्मा न शक्यते मातु परिच्छेत्तुमियानिति
यस्मात्प्रमावप्रमेयत्वादमेयात्मा हरि स्मृत । १०२

सर्वज्ञ योगशास्त्रार्थैरप्राप्तो बन्धवर्जित
असङ्गोऽयमिति श्रुत्या सर्वयोगविनिस्सृत । १०३

**वसुर्वसुमनाः सत्यः समात्माऽसम्मितः समः**
**अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः।** २५

श्लो० भा०:-

यस्मिन् वसन्ति भूतानि यो वा वसति तेष्वपि
वसूना पावकश्चास्मीत्युक्तो विष्णुर्वसु स्मृत । १०४

---

टि:-

९९ सर्वादये नम

१०० "यस्मान च्युतपूर्वोहमच्युतस्तेन कर्मणा" इति भगवद्वचनात्- अच्युताय नम

१०१ कपिर्वराहश्श्रेष्ठश्च धर्मश्च वृष उच्यते तस्मात वृषाकपि प्राह काश्यपो मा प्रजापति इति महाभारते- वृषाकपये नम

१०२ अमेयात्मने नम

१०३ नानाशास्त्रोक्तायोगादपगतत्वाद्वा इति भाष्य- सर्वयोगविनिस्सृताय नम

१०४ वसवे नम

वसुशब्दात् प्रशस्त यत् रागद्वेषादिवर्जित
परिपूत मनो यस्य प्रोक्तो वसुमनास्तत । १०५

सत्य ज्ञानादि मन्त्रात् श्रुतिषु च विदित सत्सु वा साधु सत्य
"सच्च त्यच्चाभवत् वा निगमनिगदितो मूर्तिमान् योप्यमूर्त्तं ।
सत् प्राणास्तीति चात्र यमिति दिनकरो विश्रुतश्चेतिभावात्
प्राणानादित्यरूपोप्यवितथपरमो ब्रह्म सत्य स विष्णु ॥ १०६

सम आत्मा मनो यस्य रागद्वेषाद्यदूषित
सर्वेष्वेक समात्मासौ "सम आत्मेति" च श्रुते । १०७

परिच्छिन्नो मित सर्वैरर्थजातैश्च सम्मित
अमितश्चापरिछिन्न सर्वथाऽसमितो मत । १०८

सर्वथा निर्विकारत्वात् दिक्कालाद्यै सम स्मृत
मया लक्ष्म्यान्वितो यस्तु स सम श्रीपतिर्हरि । १०९

ददाति च फल सर्व पूजितो वा स्तुत स्मृत
अमोघो निष्फलो नैव "सत्यकामश्च विश्रुत ।" ११०

अश्नुते पुण्डरीक य स लक्ष्यो यत् हृदम्बुजे
पुण्डरीकाक्ष इत्यस्य पुण्डरीकनिभेऽक्षिणी । १११

वृषो धर्म स्मृतश्चेति कर्म यस्य वृषात्मकम
धर्मार्थलक्षण सर्व वृषकर्मा प्रकीर्तित । ११२

---

टि :-

१०५ रागद्वेषादिभि क्लेशैर्मदादिभिरुपक्लेशैश्च यतो न कलुषित चित्त ततस्तस्मा प्रशस्तमिति भाष्य- वसुमनसे नम

१०६ अवितथरूपत्वात्, मूर्त्तामूर्त्तात्मकत्वाद्वा, प्राणान्नादित्यरूपत्वाद्वा, सत्सु, साधुत्वाद्वा सत्य –सत्याय नम

१०७ समात्मने नम १०८ असम्मिताय नम

१०९ समाय नम ११० अवितथ सकल्पत्वाद्वा "सत्यकाम सत्यसकल्प" इति श्रुते, अमोघाय नम -

१११ अश्नुते व्याप्नोति हृदयस्य पुण्डरीक- व्याप्यतां हृत्कमलोपलक्षित इत्यर्थ "यत् पुण्डरीक पुरमध्यसस्थ इति श्रुते — पुण्डरीकाक्षाय नम

११२ वृषकर्मणे नम

धर्मार्थमाकृतिर्यस्य शरीर स वृषाकृति
धर्मसस्थापनार्थाय सभवामीति कीर्तनात् । ११३

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः
अमृतः शाश्वतस्थाणुर्वरारोहो महातपाः । २६

श्लो० भा०:-

यो रोदयति रुद्रोसौ सहारे सहरन् प्रजा
रुद ददाति दुष्टाना भक्ताना द्रावयत्यपि । ११४

बहूनि च शिरास्यस्य प्रोक्तो बहुशिरास्तथा
"सहस्रशीर्षा पुरुष"श्चेति मन्त्रेण विश्रुत । ११५

अनन्तादिस्वरूपेण लोकान् सर्वान् बिभर्ति य
बभ्रु न कीर्तितो विष्णु सर्वाधारतया स्मृत । ११६

विश्वस्य योनि सर्वेषामादिकारणमिष्यत
विश्वयोनिस्तु सर्वादिर्विष्णुरेव स विश्रुत । ११७

शुचीनि श्रवणीयानि नामानीचि श्रवास्यपि
यस्य सन्ति महाविष्णुर्विश्रुतोऽसौ शुचिश्रवा । ११८

मृत न विद्यते यस्य सोऽमृतश्चेति कीर्तित
अजरश्चामरश्चेति श्रुत्याप्यमृत एव स । ११९

शाश्वतो नित्य एवासौ स्थाणुश्चेति स्थिरोपि स
नित्यस्थिरो निर्विकार शाश्वतस्थाणुरुच्यते । १२०

---

टि:-

११३ वृषाकृतये नम

११४ "रुदर्दु ख दुखहेतुर्वा तद्द्रावयति य प्रभु रुद्र इत्युच्यते तस्माच्छिव परमकारण ' इति लिंगपुराणवचनात् — रुद्राय नम

११५ बहुशिरसे नम

११६ बिभर्ति लोकानिति बभ्रु — बभ्रवे नम ११७ विश्वस्य कारणत्वात् विश्वयोनि — विश्वयोनय नम ।

११८ शुचिश्रवसे नम ११९ अमृताय नम

१२० शाश्वतश्चासौ स्थाणुश्चेति शाश्वतस्थाणु — शाश्वतस्थाणवे नम

आरोहोऽङ्को वरोऽस्येति वरारोहोऽपि वा श्रुत
वरमारोहण यस्मिन् पुनरावृत्त्यसभवात्। १२१

महत् ज्ञानमय चेति तपो यस्य महातपा
तप प्रतापमैश्वर्यं महत् प्रथितमस्य वा। १२२

सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः। २७

श्लो० भा० :-

कारणत्वेन सर्वत्र व्याप्तत्वात् स्वेच्छयैव स
गच्छतीति च सर्वत्र सर्वग परिकीर्तित। १२३

वेत्ति जानाति सर्वं च लभते विन्दतीति वा
सर्वज्ञ सर्ववित् प्रोक्तो लब्धसर्वार्थसाधन। ११४

भातीति भानुर्यद्भासा भासते भुवनत्रय
तमेव भान्तमित्यादि श्रुत्या चापि प्रकीर्तित। १२५

विष्वगञ्चति सर्वत्र दैत्यसेना पलायते
रणोद्योगेऽपि वा यस्मात् विष्वक्सेनो हरि स्मृत। १२६

---

टि :-

१२१ आरूढाना पुनरावृत्त्यसभवात् वर आरोहण "न च पुनरावर्तते" इति श्रुते य प्राप्य न निवर्तन्ते" इति स्मृतेश्च— वरारोहाय नम

१२२ यस्य ज्ञानमय तप इति श्रुते — महातपसे नम।

१२३ सर्वगाय नम

१२४ सर्वविच्चासौ भानुश्चेति सर्वविद्भानुरिति भाष्य- तथापि प्राचीनचतुर्थ्यन्त कोशेषु पृथगुक्त्या सर्वविदमिहषो- समस्तैकनामत्व दृश्यते- तत् पाठमनुसृत्य इह पृथङ्नामत्व स्वीकृत — सर्वविदे नम इति चतुर्थ्यन्ते- एकनामत्वे सर्वविद्भानवे नम। इति- तथा चेत् सर्वदृक् सिंह इति पृथक् नामान्तर पठनीय।

१२५ भानवे नम १२६ असुरा पलायन्ते- विष्वक्सेनाय नम

दुर्जनानर्द्दयत्येष हिनस्तीति जनार्दन
अर्द्यते याच्यते मुक्त्यै जनैर्योसौ जनार्दन । १२७

आत्मस्वरूप भवताना वेदा वेदयतीत्यसौ
तेषामेवानुकम्पार्थं मित्याद्युक्त यत स्वय । १२८

वेदान्तकृत् वेदविच्च स्वयमेव निजोदित
वेत्ति वेदार्थमित्येष वेदविच्चेति कीर्तित । १२९

ज्ञानादिभि प्रपूर्णोऽसावव्यङ्गोऽविकल स्मृत
अव्यक्तोऽयमिति स्वोक्त्या व्यङ्गो व्यक्तिर्न यस्य स । १३०

यस्याङ्गभूता सर्वेपि वेदाश्च परमो हि स
समस्तवेदवेद्यत्वात् वेदाङ्गो विष्णुरुच्यते । १३१

वेदान् वित्ते तदर्थांश्च विचारयति तत्वत
विदेर्विचारार्थतोसौ वेदविच्चेति विश्रुत । १३२

क्रान्तदर्शी कवि प्रोक्त सर्वदृक् चापि कीर्तित
"कविर्मनीषी नान्योऽतो द्रष्टा" चेत्यादि मन्त्रत । १३३

लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः । २८

---

टि :-

१२७ जनार्दनाय नम

१२८ तेषामेवानुकम्पार्थमहमज्ञानज तम नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" इति भगवद्वचनात् वेदाय नम

१२९ सर्वे वेदा सर्वविद्या सशास्त्रा सर्वे यज्ञा सर्व इज्याश्च कृष्ण विदु कृष्ण ब्राह्मणास्तत्वतो ये तेषा राजन् सर्वयज्ञा समाप्ता ' इति भारते– वेदविदे नम

१३० अव्यङ्गाय नम   १३१ वेदाङ्गाय नम

१३२ वेदविदे नम   १३३ कवये नम

श्लो० भा० :-

सर्वेषामपि लोकानामुपद्रष्टा विशेषत
अध्यक्षयति यत् लोकान् लोकाध्यक्ष इतीरित १३४

अध्यक्षोतीति चाध्यक्ष सुराध्यक्षो हरिस्तथा
सुराणा लोकपालाना स्वामी स परिकीर्त्तित । १३५

अनुरूपफल दातु साक्षिरूपेण चेक्षते
धर्माधर्मौ च साक्षाद्यो धर्माध्यक्ष प्रकीर्तित । १३६

कृतोऽसौ कार्यरूपत्वात् कारणत्वात्तथाऽकृत
विशेषण विशेष्येण समासोत्र कृताकृत । १३७

ब्रह्माद्या पृथगात्मानश्चतस्रोस्य विभूतय
सर्गे स्थितौ लये सन्ति चतुरात्मा तत स्मृत । १३८

व्यूह्यात्मान चतुर्धा यो वासुदेवादिमूर्त्तिभि
सृष्ट्यादीन् प्रकरोतीति चतुर्व्यूह प्रकीर्तित । १३९

चतुर्दंष्ट्रश्चतस्रोऽस्य नृसिंहवपुषो यत ।
दंष्ट्रा शृगाणि सादृश्यात् "चतु शृगोपि" वा श्रुते १४०

शखचक्रगदाशार्ङ्गरकिताश्च भुजा स्वत
चत्वारश्चास्य सन्तीति कीर्तित स चतुर्भुज । १४१

---

टि :-

१३४ लोकाध्यक्षाय नम १३५ सुराध्यक्षाय नम

१३६ धर्माध्यक्षाय नम १३७ कृताकृताय नम

१३८ "ब्रह्मा दक्षादय कालस्तथैवाखिलजन्तव । विभूतयो हरेरेता जगत सृष्टि हेतव । विष्णुर्मन्वाद्य काल सर्वभूतानि च द्विज । स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतय । रुद्र कालोऽन्तकाद्याश्च समस्ताश्चैव जन्तव । चतुर्धा प्रलयायैता जनार्दनविभूतय इति विष्णुपुराणोक्तत्वात् चतुरात्मा—चतुरात्मने नम

१३९ सृष्ट्यादौ वासुदेवसकर्षणप्रद्युम्नानिरुद्धाख्याश्चत्वारो व्यूहा आत्मनो मूर्ति भेदाश्चास्येति—चतुर्व्यूहाय नम

१४० चतुर्दंष्ट्राय नम १४१ चतुर्भुजाय नम

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः । २९

श्लो० भा० :-

भ्राज् दीप्तौ भुवश्चेति भूषणादावपीष्णुचा
प्रकाशैकस्वभावत्वाच्च भ्राजिष्णुरिति कीर्तित । १४२

प्रकृतिर्भोज्यरूपा या भुज्यतेऽपितु भोजन
भोजन तत्स्वरूपत्वादभेदेनोपचारत । १४३

भुङ्क्ते पुरुषरूपेण भोज्या ता प्रकृति यत
भोक्ता स पुरुषश्चेति विष्णुरेव प्रकीर्तित । १४४

सहतेऽभिभवत्येष हिरण्याक्षादिराक्षसान्
स्वप्रभावादत स्यात सहिष्णुर्विष्णुरेव स । १४५

हिरण्यगर्भरूपेण स्वयमुत्पद्यते यत
जगदादाविति प्रोक्तो विष्णु स जगदादिज । १४६

अघ पाप्मास्य नास्तीति प्रोच्यतेऽनघ इत्यसौ
श्रुत्याऽ"पहत पाप्मे"ति विष्णुरेव प्रकीर्तित । १४७

ज्ञानैश्वर्यादिभिर्विश्व गुणैर्विजयते यत
अतिशेन इति प्रोक्तो विजयो विष्णुरेव स । १४८

जि जयेऽस्मात्तृचा जेता योतिशेते स्वभावत
सर्वभूतानि चेत्यस्मात् विष्णुर्जेता प्रकीर्तित । १४९

कार्यकारणरूपत्वात् विश्व योनिस्तु यस्य स
विश्व चासौ च योनिश्च विश्वयोनि प्रकीर्तित । १५०

देवतिर्यङ्मनुष्यादि शरीरेषु पुन पुन
क्षेत्रज्ञरूपेणवासो वसतीति पुनर्वसु । १५१

---

टि :-

१४२ भ्राजिष्णवे नम		१४३ भोजनाय नम
१४४ भोक्त्रे नम	१४५ सहिष्णवे नम	१४६ जगदादिजाय नम
१४७ अनघाय नम	१४८ विजयाय नम	१४९ जेत्रे नम
१५० विश्वयोनये नम	१५१ पुनर्वसवे नम

उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः
अतीन्द्रस्संग्रहः सर्गो धृतात्मा नियमो यमः। ३०

श्लो० या० -

उपेन्द्रोह्यनुजत्वेनापीन्द्र चोपगतो ह्यथवा
इन्द्रस्योपरि वा यस्मात् स्थापितो गोभिरित्यत । १५२

बलि याचितवानेष वामनो वामनाकृति
मध्ये वामनमित्यादि मन्त्रेणोपास्य एव वा। १५३

भू पादौ द्यौ शिरश्चास्य क्रमतस्तु जगत्त्रय
इत्यादिविश्वरूपत्वात् प्रांशुत्वात् प्रांशुरेव स । १५४

न मोघो निष्फल नास्ति चेष्टित यस्य सर्वथा
अमोघो विष्णुरेवोक्त सर्वकर्मफलप्रद । १५५

पावनत्वाच्च भक्ताना स्तुवता स्मरतामपि
शुचिश्च कीर्तितो मन्त्रात् "स्पर्शश्चास्य महान् शुचि"। १५६

ज्ञानक्रिया शक्तिरूप स्वभावेन हरिस्तत
बलप्रधर्षशालित्वादूर्जितश्चेति कीर्तित । १५७

ज्ञानैश्वर्यादिभि सिद्धै स्वस्य स्वाभाविकैरपि
अतीत्येन्द्र स्थितश्चासावतीन्द्रो विष्णुरुच्यते। १५८

---

टि०-

१५२ 'ममोपरि यथेन्द्रस्त्वस्थापितो गोभिरीश्वर उपेन्द्र इति कृष्ण त्वा गास्यन्ति भुवि देवता" इति हरिवंशे- उपेन्द्राय नम

१५३ मध्ये वामनमासीन विश्वेदेवा उपासते" इति मन्त्रवर्णात् सभजनीय इति वा- वामनाय नम

१५४ तोये तु पतिते हस्ते वामनोऽभूदवामन । सर्वदेवमय रूप दर्शयामास वै प्रभु "भू पादौ द्यौ शिरश्चास्य चन्द्रादित्यौ च चक्षुषी" इत्यादि विश्वरूप दर्शयित्वा "तस्य विक्रमतो भूमि चन्द्रादित्यौ स्तनान्तरे। नभ प्रक्रममाणस्य नाभ्या तौ समवस्थितौ। दिवमाक्रममाणस्य जानुमूले व्यवस्थितौ इति प्रांशुत्व दर्शित हरिवंशे- प्रांशवे नम —

१५५ अमोघाय नम १५६ शुचये नम १५७ ऊर्जिताय नम

१५८ अतीन्द्राय नम

प्रळये सर्वभूतानि स्वस्मिन् सङ्गृह्णातीति स
सग्रह कथितो विष्णु सर्गस्थितिलयात्मक । १५९

मृज्यरूपतया सर्ग सर्गहेतुतयापि वा
सर्ग स विष्णुरेवोक्त कार्यकारणरूपत । १६०

जन्माद्यभावादात्मा च स्वरूप येन वा धृत
ऐकरूप्येण येत्यस्मात् धृतात्मा स प्रकीर्तित । १६१

स्वेषु स्वेष्वधिकारेषु य प्रजाश्च नियच्छति
नियम स विनिर्दिष्टो विष्णुरेव नियामक । १६२

अन्तर्यामि स्वरूपेण धीवृत्तीर्यच्छतीति स
यमश्च कथितो विष्णुर्यमो यमयतीत्यत । १६३

वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः
अतीन्द्रियो महामायो महोत्साहो महाबलः। ३१

श्लो० भा० -

यत्ज्ञानेनैव चाप्नोति जनस्तत्परम पद
ततश्च वेदनार्हत्वात् वेद्यो विष्णुर्मुमुक्षुभि । १६४

वेदेति सर्वविद्याश्च भक्तास्ता वेदयत्यपि।
वैद्यस्तु प्रथितश्चात सर्वज्ञो विष्णुरेव स । १६५

योगस्तु कथितश्चैक्य क्षेत्रज्ञपरमात्मनो
आविर्भूतैक्यरूपत्वात् सदायोगी तु सर्वदा। १६६

धर्मसस्थापनार्थाय वीरानपि च दुर्मतीन्
निहन्ति नियमेनेति वीरहा हरिरुच्यते । १६७

---

टि :-

१५९ सर्वेषा प्रतिसहारात् सग्रह इति – सग्रहाय नम
१६० सर्गाय नम    १६१ धृतात्मने नम    १६२ नियमाय नम
१६३ यमाय नम    १६४ वेद्याय नम
१६५ सर्वविद्या वेत्तीति वैद्य भक्ताश्च वेदयतीति च वैद्य - वैद्याय नम ।
१६६ सदायोगिने नम    १६७ वीरघ्ने नम

माया श्रियश्च विद्याया धव स्वामी पतिश्च य
श्रीपतिर्माधवश्चैव विद्यास्वामी स कीर्तित । १६८

यथा मधुपरा प्रीतिमुत्पादयति यत् स्वत
सादृश्यात् मधुना चैव मधुश्च हरिरुच्यते । १६९

इन्द्रियाण्यप्यतिक्रान्त शब्दादिरहितत्वत
श्रुत्याप्य "शब्दमस्पर्श" हरिश्चातीन्द्रिय स्मृत । १७०

माया तु महती यस्य मायिनामपि मोहिनी
महामाय स्वय चोक्त "मम माया दुरत्यया" । १७१

सर्गस्थितिलयार्थेषु यस्योत्सोहो महाश्च स
उद्युक्तत्वात् प्रकर्षेण महोत्साह इतीरित । १७२

प्राणन जीवन चास्य साधन बलमुच्यते
महत् बल तु यस्यास्ति प्रोक्त स तु महाबल । १७३

## महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः
## अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृत्। ३२

श्लो० भा० :–

बुद्धिमत्त्वाच्च विज्ञत्वात् सर्वबुद्धिमतामपि
महती बुद्धिरस्येति महाबुद्धि प्रकीर्तित । १७४

---

टि०

१६८ मा विद्या च हरे प्रोक्ता तस्या ईशो यतो भवान् तस्मान्माधवनामापि धव स्वामीति शब्दित इति हरिवंशे- माधवाय नम.

१६९ मधुशब्दस्य क्लीबत्वेपि अर्धर्चादिगणे पाठात् पुनपुसक्योर्मधु इति पुंस्त्वमपि युक्तमेव, अत एव चतुर्थ्यन्तकोशेषु मधुरे नम मधवे नम इति च ।

१७० अतीन्द्रियाय नम १७१ महामायाय नम

१७२ महोत्साहाय नम

१७३ बलिनामपि बलवत्त्वात् महाबल — महाबलाय नम

१७४ महाबुद्धये नम

अविद्यालक्षण वीर्यं जगदुत्पत्तिकारण
महदस्येति महावीर्य प्रोक्तस्तु भगवान् हरि । १७५

शक्ति सामर्थ्यमस्यति महती सर्वतोधिका
महाशक्तिरिति प्रोक्तो विष्णु शक्तिमता वर । १७६

महती च द्युतिर्यस्य ज्योतिश्चेति महाद्युति
श्रुत्या चापि "स्वयज्योति" ज्योतिषा ज्योतिरित्यपि । १७७

निर्देष्टुमपि चाशक्य वपुश्चैवमिति स्वत
अनिर्देश्यवपु प्रोक्त स्वयवेद्यतया हरि । १७८

श्रीरस्यातिशयनास्ति समग्रैश्वर्यलक्षणा
श्रीमतामग्रणीश्चेति श्रीमानित्युच्यते हरि । १७९

आत्मा बुद्धिरमेयोस्य सर्वैश्च प्राणिभिर्यत
अमेयात्मा हरिश्चैव परमात्मा महामना । १८०

महाद्रिमब्धिमथने मन्दर गोकुलावने
गोवर्धन दधारेति कीर्तित स महाद्रिधृत् । १८१

## महेष्वासो महीभर्त्ता श्रीनिवासः सतांगतिः
## अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः । ३३

स्तो० भा०:-

इष्वासस्तु शरक्षेपो महान् यस्य तु कीर्तित
महेष्वासो हरिश्चैव शार्ङ्गधन्वा यतो हि स । १८२

---

टि:-

१७५ महावीर्याय नम

१७६ महाशक्तये नम

१७७ महाद्युतये नम । १७८ अनिर्देश्यवपुषे नम ।

१७९ श्रीमते नम । १८० अमेयात्मने नम ।

१८१ धृञ क्विपि ह्रस्वस्यतुक इति महाद्रि दधारेति महाद्रिधृत् दन्त्यवर्ग प्रथमान्त यथा चोक्त महाद्रिधृत तकरान्तस्त्रिलोकधृदपीरित । विश्वनृक्तु धकारान्त सो वकारान्त उच्यते इति–महाद्रिधृते नम । धकारान्तपक्षे महाद्रिधृषे नम ।

१८२ महेष्वासाय नम ।

एकार्णवाप्लुता देवी मही यस्तु बभार स
महीभर्ता भूमिपोसौ विष्णुरेव प्रकीर्तित । १८३

सर्वदा वसति श्रीश्च वक्षस्यास्यानपायिनी
श्रीनिवास इति प्रोक्त श्रीपतिर्विष्णुरेव स । १८४

मता गतिस्तु साधूना पुरुषार्थाप्तिसाधन
शरण वा सज्जनाना सर्वाभीष्ट फलप्रदम् । १८५

निरुद्धो नैव केनापि प्रादुर्भावेष्वपि क्वचित्
विष्णुरेवानिरुद्धोसौ व्यूहष्वेव प्रकीर्त्तित । १८६

सुरानानन्दयत्येष दुष्टदैत्यनिबर्हणात्
सुरानन्द इति प्रोक्त सर्वसौख्यप्रदो हरि । १८७

गामब्धेरविदत् वराहवपुषा मग्ना क्षिति चोद्धरन्
गोविन्दोपि च गा स वेदनिवह मत्स्यो हयग्रीवहा ।
देवानामपि चेन्द्रवत् स तु गवा गोविन्द इन्द्रोऽथवा
गामिन्द्रोपरि चाप्तवानपि पद धेन्वा च गोविन्दताम् ॥ १८८

वेदात्मिका तु गीर्वाणी ता विदन्तीति गोविद
तेषा पतिश्च स्वामीति गोविदापतिरच्युत । १८९

**मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः**
**हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः । ३४**

---

टि-

१८३ महीभर्त्रे नम ।

१८४ श्रीनिवासाय नम ।

१८५ सवागत्यै नम ।

१८६ व्यूहेष्वेक इति वासुदेव, सकर्षण, प्रद्युम्नानिरुद्धेष्वनिरुद्ध इति वा अनिरुद्धाय नम ।

१८७ सुरानन्दाय नम

१८८ अह किलेन्द्रो देवाना त्व गवामिन्द्रता गत गोविन्द इति लोकास्त्वा स्तोष्यन्ति भुवि शाश्वतम् "गौरेषातु तथा वाणी ता च विन्दयते भवान् । गोविन्दस्तु ततो देव, मुनिभि कथ्यत भवान्" इति हरिवशे- गोविन्दाय नम

१८९ गोविदापतये नम

श्लो० भा० :-

रश्मिभंरोचिर्गोभ्या च वृत्या तेजस्त्वमीरित
भगवद्वचनेनैव "तेजस्तेजस्विनामहम्" । १९०

स्वाधिकारात् प्रमाद्यन्ती प्रजा दमयितु स्वत
शीलमस्याति दमनो यथाकाऽ यथोचितम् । १९१

तादात्म्यभावेन स समूठेर्मय
हन्तीति हसोपि च गच्छतीति वा ।
नृणा शरीरेषु च हसवेत्ति वा
मन्त्राच्च "हस शुचिषत्" तमोपहा ॥ १९२

द्वासुपर्णेति मन्त्रेण पक्षितास्य निरूपिता
शोभने चास्य पर्णे द्वे सुपर्णो गरुडोपि वा । १९३

भुजेन गच्छन् भुजगस्तेषामप्युत्तमो यत
अनन्तो वासुकिर्वापि भुजगोत्तम उच्यते । १९४

हिरण्यमिव कल्याणी नाभिरस्याति कीर्तित
हिरण्यनाभो यज्ञार्भिहितातिरुचिरा स्वत । १९५

नरनारायणात्मा यो नित्य बदरिकाश्रम
सुतपा प्रथितश्चासौ तपश्चरति शोभनम् । १९६

पद्मनाभोस्य नाभिस्तु पद्मवच्च सुवर्तुला
हृत्पद्मस्याथवा तस्य नाभिमध्ये प्रकाशनात् । १९७

पति पिता रक्षिता वा प्रजाना पतिरेव स
प्रजापतिश्च विश्वेशो विष्णुरेव प्रकीर्तित । १९८

---

टि:-

१९० मरीचय नम

१९१ दमनाय नम     १९२ अह स स एवाह इतितादात्म्य दर्शिना, ससार बन्धन सर्व हृतीति हस । पृषोदरादित्वात् शब्दसाधुत्व- हसाय नम

१९३ सुपर्णाय नम     १९४ भुजगोत्तमाय नम

१९५ हिरण्यनाभाय नम     १९६ मनसश्चेन्द्रियाणा च ह्यैकाग्र्य परम तप सुतपसे नम -

१९७ पद्मनाभाय नम ।   १९८ प्रजापतये नम ।

अमृत्युः सर्वदृक्सिंहः सन्धाता सन्धिमान् स्थिरः
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा । ३५

श्लो० भा० :–

मृत्युर्विनाशस्तद्धेतुर्वास्य नास्तीति सर्वथा
अमृत्युर्गदितो नित्यश्चाद्यन्तरहितो हरि । १९९

कृताकृत पश्यति सर्वमेव
साक्षी स्वबोधेन स सर्वदृक् च ।
हिनस्त्यघोघानिति सिंह उक्त
स सर्वदृक्सिंह इतीह विष्णु ।। २००

स्वस्वकर्मफलै सर्वान् सन्धत्ते पुरुषानिति
सन्धाता सर्वकृत्स्वामी विष्णुरेव प्रकीर्तित । २०१

जीवात्मन फलै सन्धि सदास्तीति च सन्धिमान्
फलभोक्ता स एवासौ विष्णुरित्यभिधीयते । २०२

सदैकरूपवत्त्वेन स्थाधातारिरचा स्थिर
निर्विकारोऽच्युतश्चेति विष्णुरव स्थिराभिध । २०३

अजतीत्यज इत्युक्तो वायुरूपेण चेष्टयन्
क्षिपतीत्यथवा दुष्टान् विष्णुर्ब्रह्माप्यज स्मृत । २०४

अशक्यो मर्षितु सोढु दानवाद्यै यतश्च स
दुर्मर्षणो हरिश्चेति सर्वदुष्टनिषूदन । २०५

श्रुतिस्मृत्यादिभि सर्वान् शास्तीति च यथोचित
शास्ता स हरिरेवोक्तो विधिष्व ज्ञापने रत । २०६

---

टि :–

१९९ अमृत्यवे नम ।

२०० एकनामपक्षे–सर्वदृक् सिंहाय नम , पृथक नाम पक्षे तु–सर्वदृशे नम सिंहाय नम इति २०१ सन्धात्रे नम २०२ सन्धिमते नम

२०३ स्थाधातोरजिरेत्यादिना इरच् इति स्थिर –स्थिराय नम ।

२०४ आत् विष्णोर्जात इति अज ब्रह्मा, तस्यापि तन्मूर्तिभेदत्वात् अजो विष्णु रेव–अजाय नम । २०५ दुर्मर्षणाय नम

२०६ शासु अनुशिष्टौ शास्ति धातो शासिदसिदादिभ्य मजायो यातिशयितिग्र शास्ता–शास्त्रे नम

विशेषेण श्रुतश्चेति सत्यज्ञानादिलक्षण
आत्मा चास्येति विष्णुश्च विश्रुतात्मा प्रकीर्तित.। २०७

सुराणामरयो दुष्टा दानवाद्या भयंकरा
तान् निहन्तीति च प्रोक्तो विष्णुश्चापि सुरारिहा। २०८

## गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः
## निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः। ३६

श्लो० भा०: -

समस्ताना तु विद्यानामुपदेष्टा सतामिति
सर्वेषा जनकत्वाद्वा गुरुरित्युच्यते हरि। २०९

विरिञ्च्यादिगुरूणा च ब्रह्मविद्याप्रदायक
प्रोक्तो गुरुतमो विष्णुर्यो ब्रह्माणमिति श्रुते। २१०

"नारायणपरो" मन्त्रात् धाम ज्योतिर्हरिस्तथा
सर्वकामास्पदो धाम पर ब्रह्मेति च श्रुते। २११

सत्यवाक् धर्मरूपत्वात् सत्यस्तु बहुधा श्रुत
तत् सत्य परम चेति प्राणा वै सत्यमादिभि। २१२

सत्यश्चावितथश्चास्य यत् पराक्रम इत्यत
प्रादुर्भावेषु सर्वेषु प्रोक्त सत्यपराक्रम। २१३

योगनिद्रापरत्वाच्च नेत्रे चास्य निमीलिते
निमिषश्चेति स प्रोक्तो नित्ययोगी हरियत। २१४

नित्यप्रबुद्धरूपत्वात् निमिषो नास्ति चेत्यत
प्रोक्तश्चानिमिषो विष्णुर्मत्स्यरूपतयाथवा। २१५

---

टि:

२०७ विश्रुतात्मने नम  २०८ सुरारिघ्ने नम  २०९ गुरवे नम

२१० गुरुतमाय नम  २११ धाम्ने नम

२१२ 'तस्मात् सत्य परम वदन्ति' सत्यस्य सत्यमितित्रा' प्राणा वै सत्य तपामेप सत्य इति च श्रुते सत्याय नम।

२१३ सत्यपराक्रमाय नम।  २१४ निमिषाय नम।  २१५ अनिमिषाय नमः।

भूततन्मात्र रूपा च वैजयन्त्यभिधा स्रज
माला नित्य बिभर्त्तीति स्रग्वी विष्णु प्रकीर्त्तित । २१६
वाचस्पतिश्च विद्याया सर्वार्थविषयात्मिका
धीरस्योदारधीश्चासौ वाचस्पतिरुदारधी । २१७

## अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः
## सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् । ३७

श्लो० भा० :-

सर्वोत्कृष्टपद चाग्रय मुमुक्षून् योजयत्यसौ
अग्रणी प्रथितो विष्णुर्भवनाना परमाश्रयम् । २१८
भूतग्राम जीवजाल नयतीति च रक्षति
योसौ स ग्रामणी प्रोक्तो विष्णुरेव जगत्पति । २१९
सर्वातिशायिनी कान्ति श्रीरस्येति प्रकीर्त्तित
श्रीमाश्च विष्णुरेवासौ मतुबा श्रीमता वर । २२०
निश्चिनोति प्रमाणानि येन न्याय प्रकीर्त्तित
न्याय करोति सर्वेषा यो न्यायो हेतुरस्य वा । २२१
पुरुषार्थप्रदानेन स्वामित्वात् जगतामपि
जगद्यन्त्रविधाता च नेता निर्वाहको हरि । २२२
गतौ क्षेपे कम्पने चेतीरेर्धातो समीरण
चेष्टयत्यप भूतानि श्वसनात् सम्यगीरणात् । २२३

टि:-

२१६ स्रग्विणे नम । २१७ वाचस्पतये उदारधिये नम ।
२१८ अग्रण्य नम २१९ ग्रामण्य नम २२० श्रीमते नम
२२१ प्रमाणानुग्राहकस्तर्को न्याय । निपूर्वादिण ग्यति निश्चिनोतीति न्याय यद्यग्निर्न स्यात् तर्हि धूमोपि न स्यात् इत्यादि तर्कज्ञानाना चिद्रूपेश्वर स्वरूपत्वात् न्याय इत्युच्यते- न्यायस्याधारत्वादस्मानन- सर्वेषां न्याय करोतीति वा तस्य हेतुर्वा न्याय -न्यायाय नम
२२२ नेत्रे नम २२३ ईर गती चेष्टायां कम्पने क्षेपे वा बाहुल्यात् कर्तरि ल्ट ईरण समीरणाय नम

सहस्रमूर्धा मूर्धानि सहस्राण्यस्य चेति स
सहस्रशीर्षा पुरुषश्चेति मन्त्रेण कीर्तितः । २२४

विश्वस्यात्मा तु विश्वात्मा विश्वव्यापितयापि वा
"स भूमिं विश्वतो वृत्वे"त्यादि मन्त्रेण विश्रुतः । २२५

सहस्रं क्षाण्यस्य चाक्षीणि सहस्राणीति विश्रुतः
मन्त्रेणापि सहस्राक्षो विश्वदृक् पुरुषो हि सः । २२६

सहस्रपादस्य पादाः सहस्राणीति कीर्तितः
श्रुत्यापि पुरुषश्चासौ" सहस्राक्षः सहस्रपात् । २२७

**आवर्त्तनो निवृत्तात्मा संवृतः संप्रमर्दनः**
**अहः संवर्त्तको वह्निरनिलो धरणीधरः ।** ३८

श्लो० भा० :–

संसारचक्रभ्रमणं भूयोप्यावर्त्तयन्निति
अविच्छिन्नं तु तच्छीलात् हरिरावर्त्तनः स्मृतः । २२८

आत्मा चास्य स्वरूपं तु स्वतः संसारबन्धनात्
निवृत्तश्चेति विष्णुश्च निवृत्तात्मा प्रकीर्तितः । २२९

अविद्यया संवरण्या संवृतत्वाच्च संवृतः
अविद्यापनयादेव वेद्योसौ ज्ञानिनामपि । २३०

रुद्रकालादिभिश्चात्र स्वस्यैव च विभूतिभिः
सम्यक् प्रमर्दयत्येष संप्रमर्दन उच्यते । २३१

अहः संवर्त्तको भानुरह्नां सम्यक् प्रवर्त्तनात्
विष्णुश्च भानुरूपत्वात् कालात्मा स प्रकीर्तितः । २३२

---

टि:–

२२४ दश शतानि सह सरन्तीति सहस्रं – सहस्रमूर्ध्ने नमः
२२५ विश्वात्मने नमः    २२६ सहस्राक्षाय नमः
२२७ सल्यासु पूत्रस्येत्यन्त्यलोपस्समासान्त इति सहस्रपात् – सहस्रपदे नमः
२२८ आवर्तनाय नमः    २२९ निवृत्तात्मने नमः
२३० संवृताय नमः    २३१ संप्रमर्दनाय नमः    २३२ अहः संवर्तकाय नमः

भूततन्मात्र रूपा च वैजयन्त्यभिधा स्रज
माला नित्य बिभर्त्तीति स्रग्वी विष्णु प्रकीर्त्तित । २१६

वाचस्पतिश्च विद्याया सर्वार्थविषयात्मिका
धीरस्योदारधीश्चासौ वाचस्पतिरुदारधी । २१७

## अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः
## सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् । ३७

श्लो० भा० :-

सर्वोत्कृष्टपद चाग्रय मुमुक्षून् योजयत्यमौ
अग्रणी प्रथितो विष्णुर्भवनाना परमाश्रयम् । २१८

भूतग्राम जीवजाल नयतीति च रक्षति
योसौ स ग्रामणी प्रोक्तो विष्णुरेव जगत्पति । २१९

सर्वातिशायिनी कान्ति श्रीरस्येति प्रकीर्त्तित
श्रीमाश्च विष्णुरेवासौ मतुबा श्रीमता वर । २२०

निश्चिनोति प्रमाणानि येन न्याय प्रकीर्त्तित
न्याय करोति सर्वथा यो न्यायो हेतुरस्य वा । २२१

पुरुषार्थप्रदानेन स्वामित्वात् जगतामपि
जगद्यन्त्रविधाता च नेता निर्वाहको हरि । २२२

गतौ धीये वपने चेतीरेर्धातो समीरण
चेष्टयत्येष भूतानि श्वसनात् सम्यगीरणात् । २२३

---

टि:-

२१६ स्रग्विणे नम । २१७ वाचस्पतये उदारधिये नम ।

२१८ अग्रण्ये नम २१९ ग्रामण्य नम २२० श्रीमते नम

२२१ प्रमाणानुग्राहकस्तर्को न्याय । निपूर्वादिण् गति निश्चिनोतीति न्याय यद्यग्निर्न स्यात् तर्हि धूमोपि न स्यात् इत्यादि तर्कज्ञानाना चिद्रूपेश्वर स्वरूपत्वात् न्याय इत्युच्यते- न्यायस्वाचापादन्यत्वन- सर्वथा न्याय करोतीति या तस्य हेतुर्वा न्याय -न्यायाय नम

२२२ नेत्रे नम २२३ ईर गतौ चेष्टायां कपने धीरे वा बाहुलकात् कर्त्तरि ल्यट ईरण समीरणाय नम

हिरण्यगर्भादिरूपो विष्णुश्च विविध यथा
भवतीति विभुर्मन्त्रात् "नित्य विभु"मिति श्रुते । २४०

राघवादि स्वरूपेण सत्करोति मुनीनपि
सम्यक् पूजयतीत्यस्मात् सत्कर्तासौ प्रकीर्तित । २४१

पूजितैर्ब्रह्मशर्वाद्यैरपि सर्वैश्च सत्कृत
तस्मात् पूज्यतमो विष्णु सत्कृतश्चेति कीर्तित । २४२

न्यायवृत्तिश्च साधुर्वा साधुस्तत्साधकोऽपि वा
साध्यभेदानुपादानात् साध्यमानप्रसाधक । २४३

अपह्नुते जनान् जह्नु प्रलयेऽपनयत्यपि
पर नयति भक्तांश्च जह्नुरन्यान् जहाति वा। २४४

नार यन्नरज तु तत्वनिवह व्याप्नोति हेत्वात्मना
नार चायनमस्य वायनमसौ नारस्य नारायण ।
आपो यन्नर सूनवोऽपि नयनान् नाराश्च तस्यायन
नार वाऽयति प्रवर्तयति यो नारायणो विश्वयुक् ॥ २४५

---

टि :-

२४० विभवे नम

२४१ सत्कर्त्रे नम २४२ सत्कृताय नम २४३ साधवे नम

२४४ जहाति त्यजतीति जह्नु, ओहाक्त्यागे जहातेर्द्वे च लोपश्चेति नुप्रत्यय द्वित्वमन्त्य लोपश्च-भवनात् परम पद नयतीति व्याख्याने जहाति निर्देशस्य हा धातुरूप लक्षणत्व प्रकल्प्य अन्तर्भूतण्यर्थात् ओहाङ् गतावित्यस्मान्नुप्रत्यय कल्पनीय ततो जहातेर्जिहीतेर्वा नुप्रत्यय । जनान् सहारसमय अपह्नुते अपनयतीति व्याख्याने तु ह्नुङ् अपनयनेपृषोदरादित्वात् व्युत्पत्ति कल्पनीया यथा चोक्त महेन्द्रेण 'निर्ब्रुवन्ति हि नैरुक्ता वर्णसामान्यमात्रत यथाकथचित्तेनास्य व्युत्पत्ति परिकल्प्यते" इति —जह्नवे नम

२४५ यच्च किञ्चित् जगत् सर्व दृश्यते श्रूयतेपि वा। अन्तर्बहिश्च तत् सर्व व्याप्य नारायण स्थित इति मन्त्रवर्णात् — नराज्जातानि तत्वानि नाराणीति ततो विदु तान्येव चायन तस्य तेन नारायण स्मृत इति महाभारत। 'नारायणाय नम इत्ययमेव सत्य ससारघोरविष सहरणाय मन्त्र शृण्वन्तु भव्यमतयो यतयोऽस्तरागा उच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहु इति नृसिह पुराणे — नारायणाय नम

देवेभ्यो वह्निरूपेण हव्य वहति नेति तत्
तान् प्रापयति वा वह्निर्विष्णुरेव प्रकीर्तित । २३३

अनिलोऽसावनादित्वादनिलोऽनिलयोपि वा
अननाद्वाप्यनादानादनिलो विष्णुरुच्यते । २३४

दोषरूपेण वा विष्णुर्वराहवपुषापि वा
धरण्यास्तु धरश्चेति धरणीधर उच्यते । २३५

**सुप्रसादः प्रसन्नात्मा विश्वधृक् विश्वभुक्विभुः**
**सत्कर्त्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः। ३९**

श्लो० भा०:–

शोभनो यत्प्रसादोऽस्य सुप्रसाद प्रकीर्तित
शिशुपालादिदैत्याना मोक्षदत्वात् द्विषामपि । २३६

अवाप्तसर्वकामत्वात् कर्णाद्रस्वरूपत
प्रसन्नात्मा स यस्मात्मा प्रसन्नो निर्मलत्वत । २३७

विश्व धृष्णोति सम्यक् च प्रागल्भ्येञि धृवेत्यत
प्रगल्भीकुरुते चेति विश्वधृक् विष्णुरुच्यते । २३८

भुक्ते भुनक्ति वा विश्व पालयत्यपि वा तथा
विश्वभुक् विष्णुरेवासौ कार्यकारणरूपत । २३९

---

टि :-

२३३ वह्नय नम

२३४ अनादित्वादनिल अनिलय अपि वा अनिल सत्वादिगुणाना अनादानात् वा अनिल — अनिलाय नम

२३५ धरणी धत्त इति धरणीधर — धरणीधराय नम

२३६ सुप्रसादाय नम २३७ प्रसन्नात्मने नम

२३८ प्रागल्भ्य मधथा सामर्थ्यं ञि धृषा प्रगल्भ्य इति धातो अन्तर्भावितण्यर्थात् क्विप् नेनि जत्वं षष्ठ्या तृतीयान्त विश्वधृक् इति षकारान्त विश्वधृक् तु षकारान्त गो ककारान्त उच्यते इति च — विश्वधृषे नम

२३९ विश्वभुज नम

हिरण्यगर्भादिरूपी विष्णुश्च विविध यथा
भवतीति विभुर्मन्त्रात् "नित्य विभु"मिति श्रुते । २४०

राघवादि स्वरूपेण सत्करोति मुनीनपि
सम्यग् पूजयतीत्यस्मात् सत्कर्तासौ प्रकीर्तित । २४१

पूजितैर्ब्रह्मशर्वाद्यैरपि सर्वैश्च सत्कृत
तस्मात् पूज्यतमो विष्णु सत्कृतश्चेति कीर्तित । २४२

न्यायवृत्तिश्च साधुर्वा साधुस्तत्साधकोपि वा
साध्यभेदानुपादानात् साध्यमात्रप्रसाधक । २४३

अपह्नुते जनान् जह्नु प्रळयेऽपनयत्यपि
पर नयति भक्ताश्च जह्नुरन्यान् जहाति वा । २४४

नार यन्नरज तु तत्वनिवह व्याप्नोति हेत्वात्मना
नार चायनमस्य चायनमसौ नारस्य नारायण ।
आपो यन्नर सूनवोऽधिशयनात् नाराश्च तस्यायन
नार वाऽयति प्रवर्तयति यो नारायणो विश्वधृक् ॥ २४५

---

टि :-

२४० विभवे नम

२४१ सत्कर्त्रे नम   २४२ सत्कृताय नम   २४३ साधवे नम

२४४ जहाति त्यजतीति जह्नु, ओहाक् त्यागे जहातेर्द्वे च लोपश्चेति नुप्रत्यय द्वित्वमन्त्य लोपश्च-भक्तान् परम पद नयतीति व्याख्याने तु जहाति निर्देशस्य हा धातुरूप लक्षणत्व प्रकल्प्य अन्तर्भूतण्यर्थात् ओहाङ् गतावित्यस्मान्नुप्रत्यय कल्पनीय ततो जहातेर्जिहीतर्वा नुप्रत्यय । जनान् सहारसमय अपह्नुते अपनयतीति व्याख्याने तु ह्नुङ् अपनयनेपृषोदरादित्वात् व्युत्पत्ति कल्पनीया यथा चोक्त ब्रह्मेन्द्रेण 'निर्ब्रुवन्ति हि नैरुक्ता वर्णसामान्यमात्रत यथाकथंचित्ते नास्य व्युत्पत्ति परिकल्प्यते" इति —जह्नवे नम

२४५ यच्च किञ्चित् जगत् सर्व दृश्यते श्रूयतेपि वा । अन्तर्बहिश्च तत् सर्व व्याप्य नारायण स्थित इति मन्त्रवर्णात् — नराज्जातानि तत्वानि नाराणीति ततो विदु तान्येव चायन तस्य तेन नारायण स्मृत इति महाभारते । 'नारायणाय नम इत्ययमेव सत्य ससारघोरविष सहरणाय मन्त्र शृण्वन्तु भव्यमतयो यतयास्तरागा उच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहु इति नृसिंह पुराणे — नारायणाय नम

नयतीति नर प्रोक्त परमात्मा सनातन
यः स्वभक्तान् नयत्यन्ते स्वस्यैव परम पदम्। २४६

**असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृत् शुचिः**
**सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः।** ४०

श्लो० भा० :-

नामरूपादिभेदोऽस्य सङ्ख्यानार्हो न विद्यते
अरूपोऽनन्तरूपो वाप्यसङ्ख्येय प्रकीर्तित २४७

कीर्तित सोऽप्रमेयात्मा प्रमाणैर्नैव ज्ञायते
प्रमातुमात्माऽप्रमेय स्वरूप वास्य चेति यत्। २४८

विशिनष्ट्यतिशेते च सर्वथा सर्वमेव च
विशिष्ट इति विख्यातो विष्णुरेव विशेषत। २४९

शिष्ट तु शासन तस्य कर्ता शिष्टकृदुच्यते
शिष्टान् साधून् करोतीति शिष्टकृत् शिष्टपालक। २५०

रजस्तमोभ्यामश्लिष्ट शुद्धसत्त्वो निरञ्जन
निर्मलश्च विशुद्धात्मा शुचिश्चेति प्रकीर्तित। २५१

अर्थ्यते चेरयर्थ एव काम सिद्धोऽपि साधित
नियतकाम सिद्धार्थ "सत्यकाम" इति श्रुते। २५२

सिद्धो निष्पन्न एवास्य सङ्कल्प साधुसाधित
सिद्धसङ्कल्प इत्युक्त "सत्यसङ्कल्प" विश्रुत। २५३

---

टि :-

२४६ नराय नम
२४७ असंख्येयाय नम    २४८ अप्रमेयात्मने नम
२४९ विशिष्टाय नम
२५० सामान्यवचनो धातु विशेषवचनो दृष्ट इति पाणिनीय — शिष्टकृते नम
२५१ शुचये नम    २५२ सिद्धार्थाय नम
२५३ सिद्धसङ्कल्पाय नम

फलानि सिद्धि वर्नृभ्यो ददाति च यथोचित
वर्मानुसारतश्चेति सिद्धिदश्चेति कीर्तित । २५४

भवनाना वर्मणा सिद्धे साधकश्चेति साधन
सिद्धिसाधन इत्यस्मात् विष्णुरेव प्रकीर्तित । २५५

**वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः**
**वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ।** ४१

श्लो० भा० :-

वृषो धर्मश्च पुण्यश्चाप्यह् पुण्यप्रकाशनात्
द्वादशाहादियज्ञोमी वृषाही तु वृषाहवान् । २५६

भक्तेभ्य सर्वकामाश्च वर्षतीति यथोचित
वृषभ स तु धर्मात्मा विष्णुरेव प्रकीर्तित । २५७

विचक्रमे विश्वमिद त्रिभिरेव पदै स्वत
विश्वरूपी स कथिता विष्णुर्विक्रमणादिति । २५८

धर्मसोपानपर्वाणि वृषरूपाणि यस्य स
आरम्भो पर धाम वृषपर्वा प्रकीर्तित । २५९

वृष वर्षणशील यदुदर तु वृषोदर
वृषोदरोऽसौ कल्पादौ वपतीव प्रजा स्मृता । २६०

दुष्टाना शिक्षणेनासौ शिष्टाना रक्षणेन च
प्रजा वर्धयतीत्येष वर्धनश्चेति कीर्तित । २६१

---

टि :-

२५४ सिद्धिदाय नम
२५५ सिद्धिसाधनाय नम

| | |
|---|---|
| २५६ वृषाहिणे नम | २५७ वृषभाय नम |
| २५८ विष्णवे नम | २५९ वृषपर्वणे नम |
| २६० वृषोदराय नम | २६१ वर्धनाय नम |

नयतीति नरः प्रोक्तः परमात्मा सनातनः
यः स्वभक्तान् नयत्यन्ते स्वस्यैव परमं पदम् । २४६

असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृत् शुचिः
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः । ४०

श्लो० भा० :–

नामरूपादिभेदोऽस्य संख्यानार्हो न विद्यते
अरूपोऽनन्तरूपो वाप्यसंख्येयः प्रकीर्तितः । २४७

कीर्तितः सोऽप्रमेयात्मा प्रमाणैर्नैव शक्यते
प्रमातुमात्माऽप्रमेयः स्वरूपं वास्य चेति यत् । २४८

विशिनष्ट्यतिशेते यः सर्वथा सर्वमेव सः
विशिष्ट इति विख्यातो विष्णुरेव विशेषतः । २४९

शिष्टं तु शासनं तस्य कर्ता शिष्टकृदुच्यते
शिष्टान् साधून् करोतीति शिष्टकृत् शिष्टपालकः । २५०

रजस्तमोभ्यामश्लिष्टः शुद्धसत्त्वो निरञ्जनः
निर्मलश्च विशुद्धात्मा शुचिश्चेति प्रकीर्तितः । २५१

अर्थ्यते चेत्यर्थ एव कामः सिद्धोऽपि साधितः
निवृत्तकामः सिद्धार्थः "सत्यकामः" इति श्रुतेः । २५२

सिद्धो निष्पन्न एवास्य सङ्कल्पः साधुसाधितः
सिद्धसङ्कल्प इत्युक्तः "सत्यसङ्कल्प" विश्रुतः । २५३

---

टि :-

२४६ नराय नमः

२४७ असंख्येयाय नमः २४८ अप्रमेयात्मने नमः

२४९ विशिष्टाय नमः

२५० सामान्यवचनो धातुः विशेषवचनो दृष्टः इति पालनार्थत्वं – शिष्टकृते नमः

२५१ शुचये नमः २५२ सिद्धार्थाय नमः

२५३ सिद्धसङ्कल्पाय नमः

फलानि सिद्धि यर्तृभ्यो ददाति च यथोचित
कर्मानुसारतश्चेति सिद्धिदश्चेति कीर्तित.। २५४

भवनाना कर्मणा सिद्धेः साधकश्चेति साधन
सिद्धिसाधन इत्यस्मात् विष्णुरेव प्रकीर्तित । २५५

वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः। ४१

श्लो० भा० :-

वृषो धर्मश्च पुण्यचाप्यह पुण्यप्रकाशनात्
द्वादशाहादियज्ञानो वृषाहो तु वृषाहवान्। २५६

भक्तेभ्य सर्वकामाश्च वर्षतीति यथोचित
वृषभ स तु धर्मात्मा विष्णुरेव प्रकीर्तित । २५७

विक्रमे विश्वमिद त्रिभिरेव पदै स्वत
विश्वरूपी स धनिना विष्णुर्विक्रमणादिति। २५८

धर्मसोपानपर्वाणि वृषरूपाणि यस्य स
आरुरुक्षो पर धाम वृषपर्वा प्रकीर्तित । २५९

वृष वर्षणशील यदुदर तु वृषोदर
वृषोदरोऽसौ कल्पादौ वर्षतीव प्रजा स्मृता । २६०

दुष्टाना शिक्षणेनासो शिष्टाना रक्षणेन च
प्रजा वर्धयतीत्येष वर्धनश्चेति कीर्तित । २६१

---

टि :-

२५४ सिद्धिदाय नम

२५५ सिद्धिसाधनाय नम

२५६ वृषाहिणे नम — २५७ वृषभाय नम

२५८ विष्णवे नम — २५९ वृषपर्वणे नम

२६० वृषोदराय नम — २६१ वर्धनाय नम

प्रपञ्चस्य कार्यात्मा वर्धतेऽविरत यथा
वर्धमानोपि स प्रोक्त कार्यकारणरूपत । २६२

वर्धमानोपि विष्णुश्च विविक्तश्चेति कीर्तित
प्रपञ्चाच्च यतोऽलिप्त पृथगेवावतिष्ठते । २६३

श्रुतयोऽत्र निधीयन्ते सागरे सागरा यथा
श्रुतिसागर इत्येष प्रथितो विष्णुरेव च । २६४

सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः। ४२

श्लो० भा०:-

जगद्रक्षाकराश्चेति दिव्यायुधविराजिता
शोभनास्तु भुजा यस्य सुभुजो विष्णुरीरित । २६५

सर्वधरत्वात् येनापि धर्तुं यो नैव शक्यते
दुर्धरो योगिभिर्ध्याने हृदि दुःखेन धार्यते । २६६

दिव्यवाग्मिनतो नित्य वाग्मी विष्णुरिहोच्यते
वेदा समस्ता दिव्याश्च यस्मादेव विनि सृता । २६७

महाश्चासावपीन्द्रश्च महेन्द्र इति कीर्तित
भगवद्वचनात् सोयमीश्वराणामपीश्वर । २६८

धन वसु ददातीति वसुदो धनदो हरि
"अन्नादो वसुदानश्च" श्रुत्या चापि प्रकीर्तित । २६९

---

टि:-

२६२ वर्धमानाय नम  २६३ विविक्ताय नम

२६४ श्रुतिसागराय नम

२६५ सुभुजाय नम  २६६ दुर्धराय नम  २६७ वाग्मिने नम

२६८ महेन्द्राय नम  २६९ वसुदाय नम

वस्वात्मा वसु येन्युक्तः छन्नरूपोपि मायया
वस्वन्तरिक्ष श्रुत्या वा वसुर्वायुश्च कीर्तित । २७०

नैकरूपो हरिर्मन्त्रै"रिन्द्रो मायादिभि" श्रुत
ज्योतोपि विष्णुरित्यादि स्मृत्याद्यस्याप्यनेकरूपता। २७१

वराहनरसिंहादि बृहच्चेति महत् च यत्
रूपमस्येति स प्रोक्तो बृहद्रूपो महावपु । २७२

पशवो रश्मयश्चापि शिपयस्तेषु विष्टवान्
शिपिविष्टो यज्ञरूपो विश्वात्मा भानुरूपत । २७३

प्रकाशयति यस्सर्व स्वय वा य प्रकाशते
प्रकाशन स तेजस्वी विष्णुरेव प्रकीर्तित । २७४

## ओजस्तेजो द्युतिधरः प्रकाशात्मा प्रतापनः
## ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः। ४३

श्लो० भा० :-

ओजस्तेजो द्युतिधरश्चौज प्राणबल तथा
शौर्यादि तेजो दीप्ति च द्युति धारयतीति स । २७५

---

टि:-

२७० दीप्यमान तद्रश्मि स ऐवेति वसु तथा नाम्न वशीवस्व-माययात्मस्वरूपमा च्छादयतीति वा विशेषेण अन्तरीक्ष एव वसतीति वा श्माधारणेन वसनेन वायु वा वसुरिति पुल्लिग तथा – वसवे नम – वसुने नम इति वा।

२७१ "इन्द्रो मायाभि पुरुरूप ईयते" इति श्रुति – नैकरूपाय नम

२७२ बृहद्रूपाय नम

२७३ यज्ञो वै विष्णु पशु रश्मिर्वा शिपि यज्ञ एव पशुषु प्रतितिष्ठति –इति श्रुति शिपयो जीवा तत्स्वन्तर्यामितया प्रविष्टश्शिपिविष्ट इति भागवतव्याख्यान श्रीधरीय – शिपिविष्टाय नम

२७४ प्रकाशनाय नम

२७५ "बल बलवतामस्मि तेजस्तेजस्विनामह' इति भगवद्वचनात् ओज तेज इति पृथङनामद्वय वा ज्ञानलक्षणाया द्युतेर्धर द्युतिधर इति एक नाम च – ओजस्तेजो द्युतिधराय नम – पृथङ् नाम पक्षे – ओजसे नम, तेजसे नम द्युतिधराय नम इति च।

प्रपञ्चरूप कार्यात्मा वर्धते ऽविरत यथा
वर्धमानोऽपि स प्रोक्त कार्यकारणरूपत । २६२

वर्धमानोऽपि विष्णुश्च विविक्तश्चेति कीर्तित
प्रपञ्चाच्च यतोऽलिप्त पृथगेवावतिष्ठते । २६३

श्रुतयोऽत्र निधीयन्ते सागरे सागरा यथा
श्रुतिसागर इत्येव प्रथितो विष्णुरेव च । २६४

## सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः
## नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः। ४२

श्लो० भा०:–

जगद्रक्षाकराश्चेति दिव्यायुधविराजिता
शोभनास्तु भुजा यस्य सुभुजो विष्णुरीरित । २६५

सर्वधरत्वात् केनापि धर्तुं यो नैव शक्यते
दुर्धरो योगिभिर्ध्याने हृदि वु लेन धार्यते । २६६

दिव्यवागन्वितो नित्य वाग्मी विष्णुरिहोच्यते
वेदा समस्ता दिव्याश्च यस्मादेव विनि सृता । २६७

महाश्चासावपीन्द्रश्च महेन्द्र इति कीर्तित
भगवद्वचनात् सोयमीश्वराणामपीश्वर । २६८

धन वसु ददातीति वसुदो धनदो हरि
"अन्नादो वसुदानश्च" श्रुत्या चापि प्रकीर्तित । २६९

---

टि:–

२६२ वर्धमानाय नम २६३ विविक्ताय नम

२६४ श्रुतिसागराय नम

२६५ सुभुजाय नम २६६ दुर्धराय नम २६७ वाग्मिने नम.

२६८ महेन्द्राय नम २६९ वसुदाय नम

तमेव भान्तमित्यादि श्रुत्या चापि प्रकीर्तित
भातीति भानुर्भान्वात्मा भानुरेव हरिस्तथा। २८४

पुष्णामि चौषधी सर्वा सोमो भूत्वा रसात्मकः
इत्युक्त्या च शशाङ्कोऽसौ शशबिन्दुः प्रकीर्तित। २८५

सुरा शोभनदातारस्तेषा चापीश्वरो हरिः
सुरेश्वर इति प्रोक्तो यस्तु विश्वेश्वर. स्वत। २८६

ससाररोगग्रस्ताना भेषजात्मतया हरिः
विश्वभेषजकार्यत्वात् औषध चेति कीर्तित। २८७

ससारोत्तरणे हेतुर्जगत सेतुरुच्यते
एष सेतुर्विधरण सर्वेषामिति च श्रुते। २८८

सत्याश्चावितथाश्चाथ धर्मा ज्ञानादयो गुणा.
पराक्रमाश्च यस्यासौ सत्यधर्मपराक्रम। २८९

**भूतभव्य भवन्नाथः पवनः पावनोऽनलः**
**कामहा कामकृत् कान्तः कामः कामप्रदः प्रभुः। ४५**

श्लो० भा० :-

भूतभव्यभवन्नाथो भूतादीन् नाथतीत्यत.
यज्ञोपतापाद्यर्थश्च नाथृन्नाथ इहोच्यते। २९०

"पवन पवतामस्मि" भगवद्वचनादिति
पवने यस्तु पवनो वायुरूपो हरि स्मृत २९१

---

टि:-

२८४ भानवे नम

२८५ शशबिन्दवे नम   २८६ सुरेश्वराय नम   २८७ औषधाय नम

२८८ जगत सेतवे नम   २८९ सत्यधर्मपराक्रमाय नम

२९० नाथृयाच्ञोपतापैश्वर्याशी पु – भूतभव्य भवत नाथति महाबल्यादीन् याचते दुष्टान् उपतपति शिष्टानाशास्त इति नाथ ऐश्वर्ये नाथतीति नाथ ईश्वर इति भूतभव्य भवतां नाथ ईश्वर भूतभव्यभवन्नाथ – भूतभव्यभवन्नाथाय नम   २९१ पवनाय नम

प्रकाशरूपोऽस्याऽऽत्मेति प्रकाशात्मा प्रकीर्तित
प्रकाशस्य स्वरूपोऽस्य यत् प्रकाशमयो ह्यसौ । २७६

विश्व प्रतापयत्येष सवित्रादिविभूतिभि
तत प्रतापनश्चेति प्रथितो विष्णुरेव स । २७७

ऋधु वृद्धौ तत तान्तात् ऋद्ध सपन्न एव स
धीधैर्यदमादिविज्ञानैर्वैराग्याद्यैश्च सद्गुणै । २७८

स्पष्ट चोदात्तसुव्यक्तमक्षर प्रणवात्मक
स्वरूपज्ञापक यस्य प्रोक्त स्पष्टाक्षरो हि स । २७९

ऋग्यजु सामरूपत्वात् मन्त्रात्मा मन्त्र ईरित
मन्त्रै सुबोध्यो मन्त्रोसौ वेदवेद्यो यतो हरि । २८०

ममारदु खतिग्मांशु तापतापितचेतसा
चन्द्रांशुरिव चन्द्रांशुर्विष्णुराह्लादको यत । २८१

भूतानि भासयत्येष ज्ञानभासापि भानुवत्
भास्करद्युति साधर्म्यात् भास्करद्युतिरुच्यते । २८२

**अमृतांशूद्भवो भानुः शशबिन्दुस्सुरेश्वरः**
**औषधं जगतः सेतुः सत्यधर्मपराक्रमः। ४४**

श्लो० भा० ·

अमृतांशोश्च यस्मात्तु चन्द्रस्योद्भव उच्यते
अमृतांशूद्भवश्चासौ मथ्यमाने पयोनिधौ। २८३

---

टि:-

२७६ प्रकाशात्मने नम    २७७ प्रतापनाय नम
२७८ ऋद्धाय नम    २७९ स्पष्टाक्षराय नम
२८० मन्त्राय नम    २८१ चन्द्रांशवे नम
२८२ भास्करद्युतये नम
२८३ अमृतोपलक्षितांशवोऽस्य सन्तीत्यमृतांशुश्चन्द्र यस्मादस्योद्भव स
अमृतांशूद्भव — अमृतांशूद्भवाय नम

कालात्मना कृतादीनि युगान्यावर्त्तयत्यसौ
भ्रामयंश्च युगावर्त्तं कालचक्रमनारतम्। ३०१

एका, माया, न, यस्येति बह्वीर्माया वहत्यसौ
नैकमायस्ततः प्रोक्तो विष्णुर्मायाप्रवर्तकः। ३०२

कल्पान्ते सर्वभूतानां ग्रसनादस्य चाशनं
महद् भवति चेत्युक्तो विष्णुश्चैव महाशनः। ३०३

बुद्धीन्द्रियाणां सर्वेषां विषयो नैव चेदसौ
न दृश्यो भावगम्यश्चेत्यदृश्यो विष्णुरुच्यते। ३०४

स्थूलरूपेण वा व्यक्तं रूपमस्येति चोच्यते
स्वयं प्रकाशमानत्वात् व्यक्तरूपोऽपि योगिनाम्। ३०५

सहस्राणीत्यसंख्यानि दुष्टदानवरक्षसां
युद्धे जयति चेत्युक्तो विष्णुरेव सहस्रजित्। ३०६

सर्वथाऽप्यचिन्त्यशक्तित्वात् सर्वभूतान्यशेषतः
अनन्तानि जयत्येव युद्धादौ चेत्यनन्तजित्। ३०७

**इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः**
**क्रोधहा क्रोधकृत् कर्ता विश्वबाहुर्महीधरः।** ४७

श्लो० भा०:-

परमानन्दरूपत्वेनेष्टः सर्वजनप्रियः
यज्ञेन पूजितश्चासाविष्टो विष्णुरुदाहृतः। ३०८

अविशेषेण सर्वेषां अन्तर्यामितया स्थितः
गुणजात्यादिराहित्यादविशिष्टः प्रकीर्तितः। ३०९

---

टि:-

३०१ युगावर्त्ताय नमः
३०२ नैकमायाय नमः　३०३ महाशनाय नमः　३०४ अदृश्याय नमः
३०५ व्यक्तरूपाय नमः　३०६ सहस्रजिते नमः　३०७ अनन्तजिते नमः
३०८ इष्टाय नमः　३०९ अविशिष्टाय नमः

मवत्र पावयत्येष वायुना पावनस्तथा
'भीषास्माद्वात' इत्यादि श्रुत्या चापि प्रकीर्तित । २९२

अनाश्च प्राणिनो लात्यादत्त इति चानल
अगन्धश्चानल श्रुत्याप्यल नास्त्येति चानल । २९३

कामान् हन्ति मुमुक्षणा भक्तानामिति कामहा
कार्ममिच्छा निहन्तीति लोकोपद्रवकारिणाम् । २९४

काम करोति भक्ताना सात्त्विकाना तु कामकृत्
प्रद्युम्नस्यापि कामस्य जनकश्चेति कामकृत् । २९५

अभिरूपतम कान्त काम्यते सकलैरपि
गोपगोपीजनैश्चासौ नारदाद्यैर्महर्षिभि । २९६

काम्यते यस्तु सर्वैश्च पुरुषार्थाभिकाङ्क्षिभि
काम स विष्णुरेवोक्तो भक्ताभीष्टफलप्रद । २९७

भक्तेभ्य सकलान् कामान् प्रकर्षेण ददाति य
कामप्रदो विष्णुरेव सर्वाभीष्टकर सदा । २९८

धर्मसंस्थापनार्थाय प्रकर्षेण भवत्यसौ
रामकृष्णादिरूपेण यथाकाल प्रभुस्तथा । २९९

युगादिकृत् युगावर्तो नैकमायो महाशनः
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् । ४६

श्लो० भा०:-

युगादीन् कालभेदास्तु करोतीति युगादिकृत्
युगानामादिमारम्भ करोतीत्यपि वा स्मृत । ३००

टि:-

२९२ पावनाय नम

२९३ नञ् गन्धने इति धातो नल गन्धवान् तस्मादन्योनल — अनलाय नम

२९४ कामघ्ने नम २९५ कामकृते नम २९६ कान्ताय नम

२९७ कामाय नम २९८ कामप्रदाय नम २९९ प्रभवे नम

३०० युगादिकृते नम

कालात्मना कृतादीनि युगान्यावर्त्तयत्यसौ
भ्रामयश्च युगावर्त्तं कालचक्रमनारतम्। ३०१

एका, माया, न, यस्येति बह्वीर्माया वहत्यसौ
नैकमायस्ततः प्रोक्तो विष्णुर्मायाप्रवर्त्तकः। ३०२

यत्कान्ते सर्वभूतानां ग्रसनादस्य चाशनं
महत् भवति चेत्युक्तो विष्णुश्चैव महाशनः। ३०३

बुद्धीन्द्रियाणां सर्वेषां विषयो नैव चेत्यसौ
न दृश्यो नावगम्यश्चेत्यदृश्यो विष्णुरुच्यते। ३०४

स्थूलरूपेण वा व्यक्त रूपमस्येति चोच्यते
स्वयं प्रकाशमानत्वात् व्यक्तरूपोपि योगिनाम्। ३०५

सहस्राणीत्यसंख्यानि दुष्टदानवरक्षसां
युद्धे जयति चेत्युक्तो विष्णुरेव सहस्रजित्। ३०६

सर्वथ्याचिन्त्यशक्तित्वात् सर्वभूतान्यशेषतः
अनन्तानि जयत्येष युद्धादौ चेत्यनन्तजित्। ३०७

इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः
क्रोधहा क्रोधकृत् कर्ता विश्वबाहुर्महीधरः। ४७

श्लो० भा०:-

परमानन्दरूपत्वेनेष्टः सर्वजनप्रियः
यज्ञैः पूजितश्चासाविष्टो विष्णुरुदाहृतः। ३०८

अविशेषेण सर्वेषां अन्तर्यामितया स्थितः
गुणजात्यादिराहित्यादविशिष्टः प्रकीर्तितः। ३०९

---

टिः-

३०१ युगावर्त्ताय नमः
३०२ नैकमायाय नमः ३०३ महाशनाय नमः ३०४ अदृश्याय नमः
३०५ व्यक्तरूपाय नमः ३०६ सहस्रजिते नमः ३०७ अनन्तजिते नमः
३०८ इष्टाय नमः ३०९ अविशिष्टाय नमः

शिष्टा इष्टाश्च यस्यासौ शिष्टैरिष्टोपि पूजित
शिष्टाना विदुषामिष्टो यस्तु शिष्टेष्ट उच्यते। ३१०

शिखण्ड शिखिपिच्छोऽस्य शिरोभूषणमित्यसौ
शिखण्डी गोपगोपीना प्रियो वेषविभूषणं। ३११

महृतीति च बध्नाति भूतान्यपि तु मायया
नहुषश्चेति विख्यात सर्वससारबन्धकृत्। ३१२

धर्मो वृषस्तु कामाना वर्षणात् बहुधा स्मृत
"वृषो हि भगवान् धर्म" श्चेति भारतवाक्यत। ३१३

क्रोध निहन्ति साधूना रागद्वेषादिकानरीन्
क्रोधहा चेत्यतस्तेषा नि श्रेयसकरो ह्यसौ। ३१४

क्रोध करोति दुष्टेषु साधुरक्षणतत्पर
धर्मसंस्थापनार्थाय क्रोधकृत् विष्णुरुच्यते। ३१५

करोति यो जगत् कर्म कर्ता सैव तु कीर्तित
"एतेषा पुरुषाणा य कर्ता" चेत्यादि च श्रुते। ३१६

आलबनाश्च विश्वेषा बाहवो यस्य वा तथा
विश्वे च बाहवो यस्य विश्वबाहु स विश्रुत। ३१७

वराहादिस्वरूपेण मही धरति वा तथा
भक्तैश्चापि कृता पूजा मही चेति महीधर। ३१८

अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः
अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः। ४८

---

टि :-

३१० शिष्टेष्टाय नम
३११ शिखण्डिने नम ३१२ नहुषाय नम ३१३ वृषाय नम
३१४ क्रोधघ्ने नम ३१५ क्रोधकृते नम
३१६ कर्त्रे नम -- क्रोधकृता दैत्यादीना कर्ता च्छेदक क्रोधकृत् कर्ता इत्येक नाम वा इति भाष्ये -- तथा चेत् क्रोधकृत्कर्त्रे नम।
३१७ विश्वबाहवे नम ३१८ महीधराय नम

श्लो० भा०:-

च्युत विकारो नाम्येति षड्भावरहितत्वत
अच्युत प्रथित श्रुत्या "शाश्वत शिवमच्युतम्" ।
प्रस्थाना जगदुत्पत्तिस्थितिप्रलयकर्मभि
प्रथितो विष्णुरित्युक्त कार्यकारणरूपत । ३२०
प्रजा प्राणयतीत्येष प्राणभूतात्मना यथा
"प्राणो वा अहमस्मी"ति मन्त्रेणापि प्रकीर्तित । ३२१
ददाति खण्डयति प्राणमसुराणा बल तथा
सुराणा च ददातीति प्राणदो हरिरुच्यते । ३२२
अदित्या काश्यपाज्जातो वासव चानु यत्नया
इन्द्रानुजश्चेति विष्णुर्वामनो वासवानुज । ३२३
आपोऽम्भिश्च निधीयन्ते स्वाश्रयत्वादपा निधि
समुद्रश्चात्र गीताख्या "सरसामस्मि सागर" । ३२४
अधितिष्ठन्ति भूतानि ब्रह्मोपादानकारणात्
"मत्स्थानि सर्वभूतानी"त्युक्तयाऽधिष्ठानमेव स । ३२५
फलदानेऽधिकारिभ्य स्वस्य कर्मानुरूपत
प्रमाद्यति च नवासावप्रमत्त प्रकीर्तित । ३२६
स्वे महिम्नि स्थितत्वाच्च विष्णुरेव प्रकीर्तित
प्रतिष्ठित "स भगव कस्मि' न्नित्यादि च श्रुते । ३२७

**स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः**
**वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः। ४६**

श्लो० भा०:-

स्कन्दत्यमृतरूपेण स्रवत्यनिलरूपत
शोषयत्यपि वा स्कन्द षण्मुखात्मा हरि स्मृत । ३२८

टि.-

३१९ अच्युताय नम ३२० प्रथिताय नम ३२१ प्राणाय नम
३२२ प्राणदाय नम ३२३ वासवानुजाय नम ३२४ अपानिधये नम
३२५ अधिष्ठानाय नम ३२६ अप्रमत्ताय नम ३२७ प्रतिष्ठिताय नम
३२८ स्कन्दाय नम

सुरासुरमहायुद्धे स्कन्दमाप्याययन् गुह
स्कन्दबन्धा त दधारेति प्रोक्त स्कन्दधरो हरि । ३२९

समस्तभूत जन्मादि लक्षणा च धुर सदा
वहतीति च धुर्योऽसौ भूभारहरणादपि । ३३०

ददाति च वरानिष्टान् वरदो गा च दक्षिणा
वर तु यजमानात्मा "गौर्वै वर" इति श्रुते । ३३१

आवहादीश्च सप्तासौ वायून् वाहयतीत्यत
वायुवाहन इत्युक्तो विष्णुरेवानिलात्मक । ३३२

विश्व छादयतीति वासयति यो भूत्यापि च। मायया
वासुश्चेति समस्तमेव वसतीत्यस्मिन् स सर्वत्र च।
देवो दीव्यति य करोति विजयक्रीडादिकर्माखिल
वासुश्चेति स देव एष कथितो यो वासुदेवो हरि ॥ ३३३

बृहन्तश्चन्द्रसूर्याग्निगामिनो विश्वभासका
भानवोऽस्यैव चेत्युक्तो बृहद्भानुर्हरि स्वत । ३३४

जगत्कारणमादिश्च देवो दीव्यति चेत्यत
आदिभूतोप्यसौ देवश्चादिदेव प्रकीर्तित । ३३५

पुराणा सुरशत्रूणा दारणाद्विश्वविश्रुत
विष्णु पुरन्दरश्चेति सूत्रकारनिपातनात् । ३३६

---

टि:-

३२९ स्कन्द धर्मपथ धारयतीति स्कन्दधर इति भाष्ये – स्कन्दधराय नम

३३० धुर वहतीति धुर्य "विश्व बिभर्त्ति भुवन"मित्यादि श्रुते – धुर्याय नम

३३१ अभिमतान वरान् ददातीति, वर गा दक्षिणा ददाति यजमानरूपेण इति वा वरद – वरदाय नम

३३२ आवहादीनामिति, आवहनिवहोद्वह, सवह, प्रवह, प्रवाह, परिवाहाना सप्ताना वायूना वाहनो वायुवाहन – वायुवाहनाय नम

३३३ दीव्यति, क्रीडति, विजिगीषते, व्यवहरति, द्योतते, स्तूयते, गच्छतीति वा देव वासुश्चासौ देवश्च वासुदेव इति भाष्ये – वासुदेवाय नम

३३४ बृहद्भानवे नम ३३५ आदिदेवाय नम

३३६ "वाचयम पुरन्दरौ" इति पाणिनिना निपातनात् – पुरन्दराय नम

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः। ५०

श्लो० भा०:-

क्षुत्पिपासा जरामृत्यु शोकमोहा षडूर्मय
शोकोपलक्षिता नैते सन्त्यतोऽशोक उच्यते। ३३७

ससारसागरे मग्नान् निर्गतोनखिलानपि
तारयत्येष बालात्मा तारणश्चेति कीर्तित । ३३८

गर्भजन्म जरामृत्युलक्षणात् सकलात् भयात्
तारयत्येष भक्तांश्च तारो विष्णुरिति स्मृत । ३३९

धर्मसस्थापनार्थाय दुष्टनिग्रहणे सदा
स्वस्य विक्रमणादेव शूर स हरिरुच्यते। ३४०

यदुवशोद्भवो राजा शूरसेनस्यात्मजस्तथा
गोत्रापत्य च शौरिस्तु वसुदेवसुतोऽप्यसौ। ३४१

जायन्त इति चेदुक्ता जनाश्चेति च जन्तव
तेषामपीश्वर प्रोक्तो विष्णुश्चैव जनेश्वर । ३४२

अनुकूलो हि सर्वेषामात्मत्वेन स्वयस्थित
स्वस्मिन् स्वय प्रातिकूल्य समाचरति नैव यत्। ३४३

आवर्तते प्राणरूपी यो वा नाडीशतेष्विति
शतावर्तोऽस्य चावर्ता प्रादुर्भावा युगे युगे। ३४४

चतुर्भुजस्य विष्णोश्च दक्षिणाध करे धृत
विद्यते पद्ममुत्कृष्ट चेति पद्मी प्रकीर्तित । ३४५

यस्य पद्मनिभे चेति तुल्ये पद्मस्य चेक्षणे
दृशावस्येति च प्रोक्तो विष्णु पद्मनिभेक्षण । ३४६

---

टि:-

३३७ अशोकाय नम    ३३८ तारणाय नम    ३३९ ताराय नम
३४० शूराय नम    ३४१ शौरये नम    ३४२ जनेश्वराय नम
३४३ अनुकूलाय नम    ३४४ शतावर्ताय नम
३४५ पद्मिने नम    ३४६ पद्मनिभेक्षणाय नम

सुरासुरमहायुद्धे स्कन्दमाप्याययन् गुह
स्वशक्त्या त दधारेति प्रोक्त स्कन्दधरो हरि । ३२९

समस्तभूत जन्मादि लक्षणा च धुर सदा
वहतीति च धुर्योऽसौ भूभारहरणादपि । ३३०

ददाति च वरानिष्टान् वरदो गा च दक्षिणा
वर तु यजमानात्मा "गोर्वै वर" इति श्रुते । ३३१

आवहादीश्च सप्तासौ वायून् वाहयतीत्यत
वायुवाहन इत्युक्तो विष्णुरेवानिलात्मक । ३३२

विश्व छादयतीति वासयति यो भूत्यापि च। मायया
वासुश्चेति समस्तमेव वसतीत्यस्मिन् स सर्वत्र च।
देवो दीव्यति य करोति विजयक्रीडादिकर्माखिल
वासुश्चेति स देव एव कथितो यो वासुदेवो हरि ॥ ३३३

बृहन्तश्चन्द्रसूर्याग्निगामिनो विश्वभासका
भानवोऽस्यैव चेत्युक्तो बृहद्भानुर्हरि स्वत । ३३४

जगत्कारणमादिश्च देवो दीव्यति चेत्यत
आदिभूतोऽप्यसौ देवश्चादिदेव प्रकीर्तित । ३३५

पुराणा सुरशत्रूणा दारणाद्विश्वविश्रुत
विष्णु पुरन्दरश्चेति सूत्रकारनिपातनात् । ३३६

---

टि:-

३२९ स्कन्द धर्मपथ धारयतीति स्कन्दधर इति भाष्ये – स्कन्दधराय नम

३३० धुर वहतीति धुर्य "विश्व बिभर्त्ति भुवन"मित्यादि श्रुते – धुर्याय नम

३३१ अभिमतान् वरान् ददातीति, वर गा दक्षिणा ददाति यजमानरूपेण इति वा वरद – वरदाय नम

३३२ आवहादीनामिति, आवहनिवहोद्वह, सवह, प्रवह, प्रवाह, परिवाहाना सप्ताना वायूना वाहनो वायुवाहन – वायुवाहनाय नम

३३३ दीव्यति, क्रीडति, विजिगीषते, व्यवहरति, द्योतते, स्तूयते, गच्छतीति वा देव वासुश्चासौ देवश्च वासुदेव इति भाष्ये – वासुदेवाय नम

३३४ बृहद्भानवे नम ३३५ आदिदेवाय नम

३३६ "वाचयम पुरन्दरौ" इति पाणिनिना निपातनात् – पुरन्दराय नम

अतुलः शरभो भीमः समयज्ञो हविर्हरिः
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः। ५२

श्लो० भा०:-

तुलामादृश्यमस्यास्ति नैव चेत्यतुलो हरिः
'न तस्य प्रतिमास्तीति' श्रुत्या स्मृत्यापि कीर्तितः। ३५६

शरास्तु शीर्यमाणत्वात् शरीराणि च तेष्वपि
प्रत्यगात्मतया भातीत्युक्तस्तु शरभो हरिः। ३५७

असद्वृत्तो बिभेत्यस्मादिति भीमो हरिस्तथा
सद्वृत्तो न बिभेत्यस्मादित्यभीमोपि वा स्मृतः। ३५८

सृष्टिस्थितिप्रलयकालमिहोचितं वा
षट् शास्त्रतत्त्वमखिलं समयं समस्तम्।
जानाति यस्तु समयज्ञ इतीह तस्य
विष्णोः समस्तमपि यत् यजनं समेषु॥ ३५९

यज्ञेषु वा हरति यस्तु, हविः स्वयं च
प्रोक्तो हविर्हरिरसावपि यज्ञभोक्ता।
यो हूयते हि हविषा स हविस्तु विष्णुः
संसारपापहरणात्, हरिरेव कान्त्या॥ ३६०

सर्वैः प्रमाणैर्यत् ज्ञानं सर्वलक्षणलक्षणं
सर्वलक्षणलक्षण्यः स्तत्र साधुर्यथार्थतः। ३६१

---

टि:-

३५६ न त्वत्समोस्त्यभ्यधिकः कुतोन्यः इति स्मृतेश्च – अतुलाय नमः

३५७ शराः शरीराणि शीर्यमाणत्वात् तेषु भातीति शरभः – शरभाय नमः

३५८ भीमाय नमः अथवा अभीमाय नमः

३५९ सर्वभूतेषु समत्वं यजनमस्येति वा "समत्वमाराधनमच्युतस्य" इति प्रह्लाद वचनात् – समयज्ञाय नमः

३६० "अवध्नन् पुरुषं पशुं" इति मन्त्रेण हविष्ट्वं श्रूयते" हराम्यघं च स्मर्तृणां हविर्भागं क्रतुष्वहं वर्णश्च मे हरिर्वेति तस्मात् हरिरहं स्मृतः "इति भगवद् वचनात् वा – हविर्हरये नमः ३६१ सर्वलक्षणलक्षण्याय नमः

पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत्
महर्द्धिरृद्धो वृद्धात्मा महाक्षो गरुडध्वजः। ५१

श्लो० भा०:-

पद्मस्य नाभौ मध्ये तु योगिना हृदयाबुजे
कर्णिकाया स्थितश्चेति पद्मनाभो हरि स्मृत । ३४७

भिन्दतीत्यरविन्द तदराण्येव दळानि यत्
अरविन्दाक्ष इत्यस्य तद्दळोपमिन्द्र्यक्षिणी। ३४८

पद्मस्य हृदयाब्जस्य गर्भे चान्त सुसस्थित
उपासकाना सलक्ष्य पद्मगर्भ समीरित । ३४९

पोषयन्नन्नरूपेण प्राणरूपेण धारयन्
स्वमायया शरीराणि बिभर्तीति शरीरभृत्। ३५०

ऋद्धिर्विभूतिर्महती चास्य सर्वातिशायिनी
महर्द्धिरिति विख्यातो विष्णुरेव विभूतिमान्। ३५१

वर्तमाने ऋधे क्तेन वर्द्धमानोह्यनारत
ऋद्ध प्रपञ्चरूपेण विष्णुरेव प्रकीर्तित । ३५२

वृद्ध पुरातनश्चेति सर्वेषामपि चादिम
आत्मा ह्यस्य चेति वृद्धात्मा कालदेशातिगो हरि । ३५३

महती चाक्षिणी यस्य सूर्यचन्द्रात्मिके तथा
महान्त्यक्षाणि वा ह्यस्येति महाक्षश्चेति कीर्तित । ३५४

गरुद्भिर्डयते चेति गरुडस्तु तदङ्कित
ध्वज पताका स्तभोस्य गरुडध्वज उच्यते। ३५५

---

टिः-

३४७ पद्मनाभाय नम ३४८ अरविन्दाक्षाय नम ३४९ पद्मगर्भाय नम

३५० शरीरभृते नम ३५१ महर्द्धय नम

३५२ ऋ धर्मेति बुद्धि पूजार्थेष्वश्चेत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् वर्तमाने क्त इति ऋद्ध – ऋद्धाय नम

३५३ वृद्धात्मने नम ३५४ महाक्षाय नम ३५५ गरुडध्वजाय नम

**अतुलः शरभो भीमः समयज्ञो हविर्हरिः**
**सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ।** ५२

श्लो० भा०:-

तुलामाहस्यमस्यास्ति नैव चेत्यनुलो हरि
'न तस्य प्रतिमास्तीति' श्रुत्या स्मृत्यापि कीर्तित । ३५६

शरास्तु शीर्यमाणत्वात् शरीराणि च तेष्वपि
प्रत्यगात्मतया भातीत्युक्तस्तु शरभो हरि । ३५७

असद्वृत्तो बिभेत्यस्मादिति भीमो हरिस्तथा
सद्वृत्तो न बिभेत्यस्मादित्यभीमोपि वा स्मृत । ३५८

सृष्टिस्थितिप्रळयकालमिहोचित वा
षट् शाश्वतत्त्वमखिल समय समस्तम् ।
जानाति यस्तु समयज्ञ इतीह तस्य
विष्णो समस्तमपि यत् यजन समेषु ॥ ३५९

यज्ञेषु वा हरति यस्तु, हवि स्वय च
प्रोक्तो हविर्हरिरसावपि यज्ञभोक्ता, ।
यो हूयते हि हविषा स हविस्तु विष्णु
ससारपापहरणात्, हरिरेव कान्त्या ॥ ३६०

सर्वं प्रमाणैर्यत् ज्ञान सर्वलक्षणलक्षण
सर्वलक्षणलक्षण्य स्तत्र साधुर्यथार्थत । ३६१

---

टि:-

३५६ ▪ त्वत्समोस्त्यभ्यधिक कुतोन्य इति स्मृतेश्च — अतुलाय नम
३५७ शरा शरीराणि शीर्यमाणत्वात् तेषु भातीति शरभ — शरभाय नम
३५८ भीमाय नम अथवा अभीमाय नम
३५९ सर्वभूतेषु समत्व यजनमस्येति वा "समत्वमाराधनमच्युतस्य" इति प्रह्लाद वचनात् — समयज्ञाय नम
३६० "अवघ्नन् पुरुष पशु" इति मन्त्रेण हविष्ट्व श्रूयते" हराम्यघ च स्मर्तृणा हविर्भाग क्रतुष्वह वर्णश्च मे हरिर्वेति तस्मात् हरिरह स्मृत "इति भगवद वचनात् वा — हविर्हरये नम ३६१ सर्वलक्षणलक्षण्याय नम

यसत्यनारत लक्ष्मीनित्यमस्यैव वक्षसि
लक्ष्मीवानिति स प्रोक्त श्रीमान् लक्ष्मीपतिर्हरि । ३६२

समिति जयतीत्येप समितिञ्जय उच्यते
सर्वत्र विजयी यस्मात् सर्वयुद्धेषु सर्वथा । ३६३

## विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः
## महीधरो महाभागो वेगवानमिताशनः । ५३

श्लो० भा०:-

विगतश्च क्षरो नाशो यस्यासौ विक्षरो यथा
जन्मव्याधिजरामृत्युरहितो नित्य एव स । ३६४

त्रेताया रोहिता मूर्ति स्वच्छन्द वहतीत्यत
रोहिता मत्स्यमूर्ति वा रोहितोसौ प्रकीर्तित । ३६५

मार्ग स कथितो विष्णुर्मार्ग्यते यो मुमुक्षुभि
प्राप्यते परमानन्दो येन मार्ग स कीर्तित । ३६६

उपादान निमित्त च कारण जगत स्वत
विष्णुरेवेति हेतुत्वात् हेतुरित्युच्यते बुधै । ३६७

दाम्ना निबद्ध उदरे तु यशोदयासौ
दामानि लोककुसुमान्युदरान्तरेऽस्य ।
योगो दमोप्युदर एव परागतिश्च
दामोदर स किल योगगतिप्रपद्य ॥ ३६८

मर्षणाभिभवायत्वात् पहस्तु क्षमतेऽथवा
सर्वानभिभवत्येप सहश्चेति प्रकीर्तित । ३६९

---

टि:-

३६२ लक्ष्मीवते नम ३६३ समितिंजयाय नम
३६४ विक्षराय नम
३६५ रोहिताय नम ३६६ मार्गाय नम ३६७ हेतवे नम
३६८ दमो योग उदर उत्कृष्टा गति योगगत्या प्राप्यो दामोदर—दामोदराय नम
३६९ सहाय नम

धरनीनि मही चासौ गिरिरूपी महीधर
"वनानि विष्णुर्गिरयो दिश"श्चेति स्मृतो हरि । ३७०

भुङ्क्ते महान्ति भोगानि स्वेच्छया धारयन् वपु
महान् भोगोऽस्य भाग्य वा महाभाग प्रकीर्तित । ३७१

वेगो जवश्चामितोऽस्य वेगवान् हरिरुच्यते
"अनेजदेक मनसो जवीय"श्च श्रुतेरपि । ३७२

अमित चाशन यस्य सोमिताशन उच्यते
संहारसमये यस्य विश्वमेवाशन यत । ३७३

## उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः
## करणं कारणं कर्ता विकर्ता गहनो गुहः। ४४

श्लो० भा० -

प्रपञ्चोत्पत्त्युपादानकारणत्वात्स तूद्भव
भवादपि तु ससारात् उद्गतस्तूद्भवो हरि । ३७४

प्रकृति पुरुष चासौ सर्गकाले प्रविश्य च
स्वेच्छया क्षोभयामास विष्णुस्तत् क्षोभण स्मृत । ३७५

देवो दीव्यति वा पयोधिशयन सर्गादिभि क्रीडति
दैत्यादीन् विजिगीषते रिपुगणान् स्तुत्यैश्च सस्तूयते ।
भूतेषु व्यवहारतोपि सतत सर्वत्र सगच्छते
भक्तान् मोदयते स्वय च मुदितो विश्वात्मना द्योतते ।। ३७६

जगद्रूपा विभूति श्रीर्गर्भे यस्योदरान्तरे
स्थिता च विष्णुरेवासौ श्रीगर्भश्चेति कीर्तित । ३७७

---

टि :-

३७० महीधराय नम ३७१ महाभागाय नम
३७२ वेगवते नम ३७३ अमिताशनाय नम
३७४ उद्भवाय नम ३७५ क्षोभणाय नम
३७६ "एको देव " इति मन्त्रवर्णात् देव दिव क्रीडायर्थत्वात् –देवाय नम
३७७ श्रीगर्भाय नम

"मम सर्वेषु भूतेषु तिष्ठन्त परमेश्वर"
इत्युक्त्या परमश्वासावीश्वर परमेश्वर । ३७८

उत्पत्तौ जगतामेव सर्वेषामपि चोत्तम
साधक करण चेति विष्णु करणमुच्यते। ३७९

जगतस्तु निमित्तत्वादुपादानतयापि च
कारण विष्णुरेवेति कारणात्मा हि कारणम् । ३८०

सर्गस्थितिलयादीश्च स्वेच्छया य करोति स
स्वातन्त्र्यात् सर्वथा चेति कर्त्ता विष्णुरिहोच्यते । ३८१

विकर्त्ता भुवन सर्वं विचित्र च करोति य
स एव भगवान् विष्णुर्विशेषेण प्रकीर्तित । ३८२

शास्तु न शक्यते यस्य स्वरूप चेष्टित तथा
सामर्थ्यमपि वा विष्णुर्गहन स प्रकीर्तित । ३८३

गूहते सवृणोतीति स्वरूपादीनि मायया
स्वस्यैव स गुह प्रोक्तो गूहनाद्विष्णुरेव स । ३८४

व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः
परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः। ५५

श्लो० भा०:-

सविन्मात्रस्वरूपत्वात् व्यवसायो यथार्थत
षो ऽन्त कर्मणि धातोस्तु व्यवपूर्वादातयुग्भव । ३८५

---

टि:-

३७८ परमेश्वराय नम  ३७९ करणाय नम
३८० कारणाय नम  ३८१ कर्त्रे नम  ३८२ विकर्त्रे नम
३८३ गहनाय नम  ३८४ गुहाय नम
३८५ षो अन्त कर्मणि धातो व्यवपूर्वादात्वे घञि आतो युक् इति व्यवसाय – व्यवसायाय नम

व्यवस्थान स यस्मिस्तु सर्वं च व्यवतिष्ठते
वर्णाश्रमादिधर्मादीन् व्यवस्थापयतीति वा । ३८६

सन्तिष्ठन्ते प्रलीयन्ते भूतान्यस्मिन् लयेत्यत
सस्थानस्तु समीचीन वैकुण्ठ स्थानमस्य यत् । ३८७

ध्रुवादीना स्वभक्ताना स्वस्वकर्मानुसारत
स्थानानि च ददातीति स्थानदो विष्णुरुच्यते । ३८८

ध्रुवानि स्थैर्ययोश्चेति विनाशरहितस्वत
स्थिरत्वादविकारी च नित्यश्चेति ध्रुवो हरि । ३८९

पराश्च परमोत्कृष्टा ऋद्धयस्तु विभूतय
अस्यति स परर्द्धिश्च विष्णुरेव प्रकीर्तित । ३९०

परमस्यानन्याधीन सदाऽनायासेन सुग्रहश्चेति
स्पष्टोऽसौ परमस्पष्ट स्वभासा सविदात्मक । ३९१

परमानन्दैकरूपी निर्वृतात्मतया स्वत
सर्वथा सर्वदा तुष्ट सच्चिदानन्दविग्रह । ३९२

"यच्च किञ्चित् जगत्सर्वं तस्मिन्नेव प्रतिष्ठित"
इत्यत सर्वथा सर्व पूर्णत्वात् पुष्ट एव स । ३९३

ईक्षण दर्शन यस्य भुक्तिमुक्तिप्रद शुभ
ज्ञानद पावनञ्चेति प्रोक्त स तु शुभेक्षण । ३९४

---

टिः–

३८६ दिक्पालाद्यधिकारपुरुषाणा, ब्राह्मणादिवर्णाना, ब्रह्मचर्याद्याश्रमधर्माणा इत्यादि सर्वेषामपि स्वस्वधर्मादिकान् विभज्य करोतीति व्यवस्थान – व्यवस्थानाय नम

३८७ सस्थानाय नम    ३८८ स्थानदाय नम    ३८९ ध्रुवाय नम

३९० परर्द्धये नम    ३९१ परमस्पष्टाय नम    ३९२ तुष्टाय नम

३९३ पुष्टाय नम

३९४ मुमुक्षूणा मोक्षद भोगार्थिना भोगद सर्व सन्देह विच्छेदकारण हृदयग्रन्थे-विच्छेदकर, सर्वकर्मणा क्षपण अविद्यायाश्च निवर्तक शुभेक्षण – शुभेक्षणाय नम

**रामो विरामो विरतो मार्गो नेयो नयोऽनयः**
**वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः।** ५६

श्लो० भा० :-

रमन्ते योगिनो यस्मिन् स राम सच्चिदात्मक
वहन् दाशरथिर्वाय रमणीय वपु स्वयम् । ३९५

अन्ते च प्राणिनामस्मिन् विरामोऽवसितिर्यत
विरामश्चेति विश्वात्मा विश्वग्रासो हरि स्मृत । ३९६

परमानन्दरूपत्वात विगत चास्य यद्रत
विरत स विनिर्दिष्टो निस्पृहश्च हरि स्वत । ३९७

मोक्षमार्गस्तु मार्गोय नेयोऽनेन च नीयते
मार्गो नेयश्चेति चैवय जीवात्मपरमात्मनो । ३९८

नयतीति नयो नेता नेयस्य परमात्मना
तन्मयत्व प्रापयन् स परमात्मा नय स्मृत । ३९९

आद्यश्चैक स्वय नेता सर्वेषामपि चेश्यत
न विद्यते नयोह्यस्य नेता च यनयो हि स । ४००

निग्रहाय सुरारीणा दुष्टदानवरक्षसा
युद्धे विक्रमशालित्वात् वीर स हरिरुच्यते। ४०१

प्रोक्त शक्तिमता श्रेष्ठो यतश्चाधिकशक्तिमान
स्वत शक्तिमतामेव ब्रह्मादीनामपि स्वयम् । ४०२

---

टि :-

३९५ रामाय नम    ३९६ विरामाय नम    ३९७ विरताय नम

३९८ य विदित्वामृतत्वाय कल्पते योगिनो मुमुक्षव स एव पन्था मार्ग ' "नान्य पन्था विद्यतेऽयनाय" इति श्रुते मार्गेण सम्यक्ज्ञानेन जीव परमात्मतया नीयत इति नेय मार्गोनेय, नय, अनय, इति त्रिरूप परिकल्प्यते — मार्गाय नेयाय नम

३९९ नयाय नम    ४०० अनयाय नम

४०१ वीराय नम    ४०२ शक्तिमता श्रेष्ठाय नम

 

धारणात् सर्वभूतानां धर्मो वा पोषणादपि
धर्मैराराध्यते चेति धर्मस्तु हरिरुच्यते । ४०३

धर्मं विदन्तीति तेषां श्रेष्ठो धर्मविदुत्तमः
यस्य चाज्ञाभवाः सर्वे श्रुतिस्मृत्यादयो यतः । ४०४

## वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः
## हिरण्यगर्भश्शत्रुघ्नो व्याप्तो वायुरधोक्षजः । ५७

श्लो० भा० :-

गते प्रतिहृति कुण्ठा विकुण्ठा विविधापि सा
तस्य कर्ता तु वैकुण्ठो भूतसंश्लेषणात् पुरा । ४०५

सर्वस्मादपि पूर्वमेव सदनात् निश्शेषपाप्मोषणात्
श्रुत्या च प्रथितः पुराणपुरुषो यद्वा पिपर्ति पुरः ।
ता एवात्र वपूंषि तत्र च पुनः शेते स जीवात्मना
प्रत्यक् पुरि चैव एव पुरुषो नारायणो विश्रुतः ॥ ४०६

प्राणितीति प्राण एष क्षेत्रज्ञात्मतया तथा
प्राणात्मना चेष्टयन् वा श्वासरूपेण च स्मृतः । ४०७

यस्तु संहारकालेऽत्र सर्वेषां प्राणिनामपि
द्यति खण्डयति प्राणान् प्राणदः स प्रकीर्तितः । ४०८

---

टि :-

४०३ धर्माय नमः ४०४ धर्मविदुत्तमाय नमः

४०५ "मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना । वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम" इति शान्तिपर्वणि – वैकुण्ठाय नमः

४०६ पॄ पालनपूरणयोरिति धातोः पिपर्ति विवपि उदोष्ठ्यपूर्वस्येति उत्वे पुरः शरीराणि तासु जीवरूपेण शेते इति पुरुषः "स यत् पूर्वोस्मात्सर्वस्मात् सर्वान् पाप्मन औषत्तस्मात् पुरुषः" इति श्रुतेः "स वा अयं पुरुषः सर्वासु पूर्षु पुरि शयः" इति च श्रुतिः –पुरुषाय नमः

४०७ प्राणाय नमः ४०८ प्राणदाय नमः

प्रणूयते स्तूयते य सर्वैश्च प्रणवस्तथा
प्रणम्यतेऽखिलैश्चापि ब्रह्माद्यै स हरि स्मृत । ४०९

सर्वप्रपञ्चरूपेण विस्तृतत्वादशेषत
पृथुत्वात् पृथुरित्युक्तो विश्वात्मा विष्णुरेव स । ४१०

हिरण्मयाण्डमेवात्र हिरण्य च तदेव यत्
गर्भो हिरण्यगर्भोऽस्य विष्णुरेव तथा स्मृति । ४११

त्रिदशाना च साधूना दुष्टदानवराक्षसान्
शत्रून् हन्तीति शत्रुघ्नो दैत्यारि स हरि स्मृत । ४१२

सर्वप्रपञ्चकार्येषु कारणत्वेन च स्वय
व्याप्नोति हरिरेवेति व्याप्तत्वात् व्याप्त उच्यते । ४१३

याति गन्ध करोतीति वायु स हरिरुच्यते
"पुण्यो गन्ध पृथिव्याश्च" भगवानवदत् स्वयम् । ४१४

द्यौरक्षमेव पृथिवी तु ततोपि चाध
आधोक्षजोऽजनि विराट् स तयोस्तु मध्ये ।
यस्मादधोऽक्ष इति न क्षयमेति जातु
तस्मादधोक्षज इति प्रथित सदैव ॥ ४१५

**ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः**
**उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः।** ५८

---

टि:-

४०९ "तस्माद्योमिति प्रणौती' ति श्रुत "प्रणमन्तीह य वेदास्तस्माद प्रणव उच्यते" इति सनत्कुमारवचनात् — प्रणवाय नम

४१० पृथव नम

४११ हिरण्यगर्भाय नम ४१२ शत्रुघ्नाय नम ४१३ व्याप्ताय नम

४१४ वायवे नम

४१५ अधोभूते ह्यक्षगणे प्रत्यग्रूप प्रवाहिते जायते तस्य वै ज्ञान तेनाधोक्षज उच्यते इत्युक्तत्वात् — अधोक्षजाय नम

श्लो० भा० :-

ऋतुः कालविशेषोऽत्र कालसामान्यवाचकः
कालात्मा भगवान् विष्णुः कालस्तु ऋतुरेव सः । ४१६

शोभनं मोक्षदं यस्य दर्शनं ज्ञानमित्यसौ
सुखेन दृश्यते भक्तैः शोभनाक्षः सुदर्शनः । ४१७

कलने गणयति सर्वं कालः क्षणलवाद्यात्मकः प्रोक्तः
"कालः कलयतामहम्" इति गीतोक्त्या च कालोऽसौ । ४१८

स्वे महिम्नि हृदाकाशे प्रकृष्टे परमे यथा
स्थाने च शीलमस्येति परमेष्ठी प्रकीर्तितः । ४१९

परितो गृह्यते यद्वा ज्ञायते शरणार्थिभिः
यत् किञ्चिदर्पितं भक्तैः परिगृह्णन् परिग्रहः । ४२०

'भीषास्माद्वातः' इत्यादि श्रुतिमन्त्रानुसारतः
उग्रः स भयहेतुत्वात् सूर्यवातादिकस्य च । ४२१

सर्वप्रपञ्चभूतानि यस्मिन् विश्वस्वरूपिणि
संवसन्तीति कालात्मा प्रोक्तः संवत्सरो हरिः । ४२२

सृष्ट्यादिसर्वकर्माणि क्षिप्रमेव करोति सः
दक्षः स कीर्तितो यो वा जगद्रूपेण वर्धते । ४२३

संसाराब्धिनिमग्नानामार्तानां विश्रमार्थिनाम्
विश्रामं च करोतीति विश्रामो मोक्षकृद्धरिः । ४२४

विश्वस्मात् दक्षिणः शक्तो विश्वेष्वपि च कर्मसु
दक्षिणश्च समर्थोऽसौ विश्वदक्षिण उच्यते । ४२५

---

टि:-

४१६ ऋतवे नमः ४१७ सुदर्शनाय नमः ४१८ कालाय नमः
४१९ "परमेष्ठी विभ्राजते" इति मन्त्रवर्णनात् – परमेष्ठिने नमः
४२० परिग्रहाय नमः ४२१ उग्राय नमः ४२२ संवत्सराय नमः
४२३ दक्षाय नमः ४२४ विश्रामाय नमः ४२५ विश्वदक्षिणाय नमः.

प्रणूयते स्तूयते च सर्वैश्च प्रणवस्तथा
प्रणम्यते ऽखिलैश्चापि ब्रह्माद्यैः स हरिः स्मृतः । ४०९

सर्वप्रपञ्चरूपेण विस्तृतत्वाददोपत
पृथुत्वात् पृथुरित्युक्तो विश्वात्मा विष्णुरेव सः । ४१०

हिरण्मयाण्डमेवात्र हिरण्यं च तदेव मत
गर्भो हिरण्यगर्भोऽस्य विष्णुरेव तथा स्मृतिः । ४११

त्रिदशानां च साधूनां दुष्टदानवराक्षसान्
शत्रून् हन्तीति शत्रुघ्नो दैत्यारिः स हरिः स्मृतः । ४१२

सर्वप्रपञ्चकार्येषु कारणत्वेन च स्वयं
व्याप्नोति हरिरेवेति व्याप्तत्वात् व्याप्त उच्यते । ४१३

याति गन्धं करोतीति वायुः स हरिरुच्यते
"पुण्यो गन्धः पृथिव्यां च" भगवानवदत् स्वयम् । ४१४

द्यौरक्षमेव पृथिवी तु ततोऽपि चाध
श्चाधोक्षजोऽयमि विराट् स तयोस्तु मध्ये ।
यस्मादधोऽक्ष इति न क्षयमेति जातु
तस्मादधोक्षज इति प्रथितः सदैव ।। ४१५

**ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः**
**उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः।** ५८

---

टि:-

४०९ "तस्मादोमिति प्रणौती' ति श्रुते "प्रणमन्तीह य वेदास्तस्माद प्रणव उच्यते" इति सनत्कुमारवचनात् – प्रणवाय नमः

४१० पृथवे नमः

४११ हिरण्यगर्भाय नमः ४१२ शत्रुघ्नाय नमः ४१३ व्याप्ताय नमः

४१४ वायवे नमः

४१५ अधोभूते ह्यक्षगणे प्रत्यग्रूप प्रवाहिते जायते तस्य वै ज्ञानं तेनाधोक्षज उच्यते इत्युक्तत्वात् – अधोक्षजाय नमः

·अनिर्विण्णः स्थविष्ठोऽभूर्धर्मयूपो महामखः
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः । ६०

श्लो० भा०: -

अवाप्तसर्वकामत्वात् निर्वेदो नास्य विद्यते
इष्टानवाप्त्या निर्वेदश्चेत्यनिर्विण्ण उच्यते । ४३५

स्थूलश्चातिशयेनासौ सर्वेष्वपि च सर्वदा
"विराड्रूप स्थविष्ठश्चा"व्यग्निमूर्ध्नेति च श्रुते । ४३६

जन्म नास्येत्यजन्यासौ भावो वा नास्य चेत्यभू
भवते त्रिष्वपि सत्तावा, भूर्वाधिकरणे मही । ४३७

यूपे तु पशुवत् धर्मास्तत् समाराधनात्मना
श्रौताद्यास्तत्र बध्यन्त धर्मयूपस्ततः स्मृत । ४३८

महान्तो मोक्षफलदा मखा यज्ञास्तु मक्षित
यदर्पिता भवन्तीति कीर्तित स महामख । ४३९

नक्षत्रताराग्रह सकुलात्मा
य शिशुमाराख्यवपुश्च तस्य ।
हृदि स्थितो नेमिवदत्र चक्रे
नक्षत्रनेमि स तु यत्प्रवर्तक ॥ ४४०

नक्षत्राण्यस्य सन्तीति नक्षत्री चन्द्र एव स
तत्स्वरूपाच्चगीतोक्त्या "नक्षत्राणामह शशी" । ४४१

क्षम समर्थ सर्वेषु कार्येष्विति हरि क्षम
क्षमते चेति स प्रोक्त क्षमया पृथिवीसम । ४४२

---

टि:

४३५ अनिर्विण्णाय नम    ४३६ स्थविष्ठाय नम    ४३७ अभुवे नम

४३८ धर्मयूपाय नम    ४३९ महामखाय नम

४४० "नक्षत्रतारकै सार्धं चन्द्रसूर्यादयो ग्रहा वायुपाशमयैर्बन्धैर्निबद्धा ध्रुव सज्ञिते" स ज्योतिषा चक्र भ्रामयस्ताराममयस्य शिशुमारस्य पुच्छदेशे व्यवस्थितो ध्रुव तस्य शिशुमारस्य हृदये ज्योतिश्चक्रस्य नेमिवत् प्रवर्तक स्थितो विष्णुरिति नक्षत्रनेमीति भाष्ये – नक्षत्रनेमये नम

४४१ नक्षत्रिणे नम    ४४२ क्षमाय नम

विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययं
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः। ५९

श्लो० भा० :-

विस्तीर्यन्ते जगन्त्यस्मिन् विलीयन्ते यतो लये
विस्तारो विस्तृणोत्येष विश्वमेवेति विश्रुत । ४२६

स्थावरा स्थितिशीलत्वात् तिष्ठन्ति स्थाणुरत्र यत्
स्थावरोऽमावपि स्थाणुः स्थावरस्थाणुरुच्यते । ४२७

यस्य विज्ञानसभूता श्रुतिस्मृत्यादयोऽखिला
संविदात्मा स एवात प्रमाण सकलस्य च। ४२८

कार्यस्य कारण बीजमन्यथाभाववर्जित
अव्यय तद्विशिष्ट च प्रोक्त तत् बीजमव्ययम्। ४२९

चिदानन्दमयोऽर्थोऽसौ सर्वसौख्यप्रदो यत
सर्वैरभ्यर्थ्यते नित्य भोक्तुकामैर्मुमुक्षुभि । ४३०

अवाप्तसर्वकामत्वादस्य जातु न विद्यते
अर्थ प्रयोजन किञ्चिदनर्थ स प्रकीर्तित । ४३१

महान्तोऽन्नमयाद्याश्च कोशा पञ्चास्य यत् स्वत
आच्छादका सन्ति चेति महाकोशो हरि स्मृत । ४३२

भोगोनुभूयते चेति सर्वथाऽस्य सुख च तत्
महान् सर्वातिशायीति महाभोग प्रकीर्तित । ४३३

महद्धन च यस्यास्ति सर्वथा भोगसाधन
महाधन इति प्रोक्तो विष्णुरेव विभूतिमान्। ४३४

---

टि :-

४२६ विस्ताराय नम ४२७ स्थावरस्थाणवे नम ४२८ प्रमाणाय नम
४२९ बीजाय अव्ययाय नम ४३० अर्थाय नम ४३१ अनर्थाय नम
४३२ कोशवदात्मस्वरूपाच्छादका कोशा अन्नमय, प्राणमय, मनोमय, विज्ञानमयानन्दमयाख्या पञ्चकोशा अस्येति महाकोश ~ महाकोशाय नम
४३३ महाभोगाय नम ४३४ महाधनाय नम

•अनिर्विण्णः स्थविष्ठोऽभूर्धर्मयूपो महामखः
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः । ६०

श्लो० भा०: -

अवाप्तसर्वकामत्वात् निर्वेदो नास्य विद्यते
इष्टानवाप्त्या निर्वेदश्चेत्यनिर्विण्ण उच्यते । ४३५

स्थूलश्चातिशयेनासौ सर्वव्यापि च सर्वदा
"विराड्रूप स्थविष्ठश्चा"प्यग्निर्मूर्ध्नेति च श्रुते । ४३६

जन्म नास्त्येत्यजन्मासौ भावो वा नास्य चेत्यभू
भवते विद्यपि सत्तावा, भूर्वाधिकरणे मही । ४३७

यूपे तु पशुवत् धर्मा,स्तान् समाराधनात्मका
यौताबास्तत्र बध्यन्ते धर्मयूपस्ततः स्मृत । ४३८

महान्तो मोक्षफलदा मखा यजान्तु भक्तिन
यदर्पिता भवन्तीति कीर्तित स महामख । ४३९

नक्षत्रताराग्रह सकुलात्मा
य शिशुमाराख्यवपुश्च तस्य ।
हृदि स्थितो नेमिवदत्र चक्रे
नक्षत्रनेमि स तु यत्प्रवर्तक ॥ ४४०

नक्षत्राण्यस्य सन्तीति नक्षत्री चन्द्र एव स
सत्त्वरूपाच्चगीतोक्त्या "नक्षत्राणामह शशी" । ४४१

क्षम समर्थ सर्वेषु कार्येष्विति हरि क्षम
क्षमते चेति स प्रोक्त क्षमया पृथिवीसम । ४४२

---

टि:

४३५ अनिर्विण्णाय नम   ४३६ स्थविष्ठाय नम   ४३७ अभुवे नम

४३८ धर्मयूपाय नम   ४३९ महामखाय नम

४४० "नक्षत्रतारकै सार्धं चन्द्रसूर्यादयो ग्रहा वायुपाशमयैर्बन्धैर्निबद्धा ध्रुव संज्ञिते" स ज्योतिषा चक्र भ्रामयस्ताराममयस्य शिशुमारस्य पुच्छदेशे व्यवस्थितो ध्रुव तस्य शिशुमारस्य हृदये ज्योतिश्चक्रस्य नेमिवत् प्रवर्तक स्थितो विष्णुरिति नक्षत्रनेमीति भाष्ये — नक्षत्रनेमये नम

४४१ नक्षत्रिणे नम   ४४२ क्षमाय नम

क्षयितेषु विकारेषु सर्वेष्वपि च सर्वथा
स्वात्ममात्रावशिष्टोऽसौ क्षमश्चेति प्रकीर्तित । ४४३

चेष्टते वापीच्छतीति सृष्ट्यर्थं सम्यगीहते
ईहो यथार्थतश्चासौ कीर्तितस्तु समीहन । ४४४

## यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः
## सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् । ६१

श्लो० भा० :-

"यज्ञो वै विष्णु"रित्यादि श्रुत्या यज्ञस्वरूपत
यज्ञकारोपि यज्ञोऽसौ देवानां तुष्टिकारक । ४४५

"ये यजन्ति मखै पुण्यै" विष्णुमेवेति च स्मृते
यष्टव्योऽप्ययमेवेति विष्णुरिज्य प्रकीर्तित । ४४६

इज्येष्वपि च सर्वेषु मोक्षसिद्धिफलत्वत
प्रकर्षेणापि यष्टव्यो महेज्यो विष्णुरुच्यते । ४४७

यूपेन सहितो यज्ञ क्रतुरित्युच्यते बुधै
तत्स्वरूपतया विष्णु क्रतुश्चेति प्रकीर्तित । ४४८

त्रायते च सत सत्रश्चासनोपाधिचोदनै
लक्षित वा सत्रमुक्त सत्रात्मा सत्रमेव स । ४४९

सताश्चेति मुमुक्षूणा भक्तानामपि योगिना
गतिस्तु गम्य सर्वेषा विष्णुरेव सता गति । ४५०

---

टि :-

४४३ क्षायो म इति पाणिनिसूत्रेण निष्ठानकारस्य मकारादेश तथा च
— क्षामाय नम

४४४ सृष्ट्याद्यर्थं सम्यगीहते, सम्यक् चेष्टते सम्यगिच्छतीति वा, सम्यगीहन
समीहन — समीहनाय नम

४४५ यज्ञाय नम ४४६ इज्याय नम ४४७ महेज्याय नम
४४८ क्रतवे नम ४४९ सत्राय नम ४५० सतांगतये नम

सर्वं च साक्षिरूपेण प्राणिना तु कृताकृत
सर्वदा पश्यतीत्येष सर्वदर्शीति कीर्तित । ४५१

विमुक्त आत्मा यस्येति विमुक्तात्मा स्वभावत
विमुक्तश्चाप्यसावात्मा श्रुत्या चैव प्रकीर्तित । ४५२

सर्वश्चासावपि ज्ञश्च सर्वज्ञ इति कीर्तित
"इद सर्वं यदात्माय" चेति स श्रुतिविश्रुत । ४५३

अजन्यमनवच्छिन्न सर्वसाधकमुत्तम
तद्विशिष्ट श्रुत ज्ञान ब्रह्मैव ज्ञानमुत्तमम् । ४५४

**सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत्**
**मनोहरो जितक्रोधो वीरबाहुर्विदारणः।** ६२

श्लो० भा०:-

शोभन व्रतमस्येति सुव्रतश्च स्मृतिर्यथा
"अभय सर्वभूतेभ्यो ददाम्येतत् व्रत मम" । ४५५

प्रसन्न वदन चारु शोभन मुखमस्य वा
विद्योपदेशात् सुमुखो "यो ब्रह्माणमिति"श्रुते ४५६

शब्दादिभिश्च खादीना स्थूलत्वश्चोत्तरोत्तर
तदभावात् स सूक्ष्मश्च श्रुत्या सर्वगत यत । ४५७

घोषस्तु शोभनो ह्यस्य वेदात्मकतया तथा
मेघगम्भीर घोषत्वात् सुघोषश्चेति कीर्तित । ४५८

सद्वृत्ताना ददातीति दुष्टाना च सुख तथा
द्यति खण्डयतीत्येष सुखदो हरिरुच्यते। ४५९

---

टि:-

४५१ सर्वदर्शिने नम    ४५२ विमुक्तात्मने नम    ४५३ सर्वज्ञाय नम
४५४ "सत्य ज्ञानमनन्त ब्रह्मेति च" श्रुत – ज्ञानायोत्तमाय नम
४५५ सुव्रताय नम
४५६ वनवाससुमुखत्वाद्वा दाशरथीराम सुमुख – सुमुखाय नम
४५७ "सर्वगत सुसूक्ष्ममिति श्रुते" – सूक्ष्माय नम    ४५८ सुघोषाय नम
४५९ सुखदाय नम

क्षयिनेषु विकारेषु सर्वेष्वपि च सर्वथा
स्वात्ममात्रावशिष्टोऽसौ क्षमश्चेति प्रकीर्तित । ४४३

चेष्टते वापीच्छतीति सृष्ट्यर्थं सम्यगीहते
ईहो भयार्थनश्चासौ कीर्तितस्तु समीहन । ४४४

## यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः
## सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् । ६१

श्लो० भा० :-

"यज्ञो वै विष्णु"रित्यादि श्रुत्या यज्ञस्वरूपत
यज्ञकारोपि यज्ञोऽसौ देवाना तुष्टिकारक । ४४५

"ये यजन्ति मखै पुण्यै" विष्णुमेवेति च स्मृते
यष्टव्योप्ययमेवेति विष्णुरिज्य प्रकीर्तित । ४४६

इज्येष्वपि च सर्वेषु मोक्षसिद्धिफलत्वत.
प्रकर्षेणापि यष्टव्यो महेज्यो विष्णुरुच्यते। ४४७

यूपेन सहितो यज्ञ क्रतुरित्युच्यते बुधै
तत्स्वरूपतया विष्णु क्रतुश्चेति प्रकीर्तित । ४४८

त्रायते च सत मन्त्रश्चासनोपाधिचोदनं
लक्षित वा सत्रमुक्त सत्रात्मा सत्रमेव ॥ । ४४९

सताञ्चेति मुमुक्षूणा भक्तानामपि भोगिना
गतिस्तु गम्य सर्वेषा विष्णुरेव सता गति । ४५०

---

टि :-

४४३ क्षायो म इति पाणिनिसूत्रेण निष्ठातकारस्य मकारादेश तथा च
— क्षामाय नम

४४४ सृष्ट्याद्यर्थं सम्यगीहते, सम्यक् चेष्टते सम्यगिच्छतीति वा, सम्यगीहन
समीहन — समीहनाय नम

४४५ यज्ञाय नम ४४६ इज्याय नम ४४७ महेज्याय नम

४४८ क्रतवे नम ४४९ सत्राय नम ४५० सतागतये नम

जगत् सृष्ट्वा ह्यनेकानि कर्म्माणि बहुधा स्वयं
करोतीति हरिश्चैव कीर्तितो नैककर्मकृत्। ४६९

वत्सरश्चाधिकरणे वसेश्चापि सरन्निति
हरिश्च वत्सरो ह्यस्मिन् वसतीत्यखिल जगत्। ४७०

वत्साशाम्या तु लश्चेति वत्सलश्चाधिकप्रिय
स्निह्यतीति च भक्ताश्च वत्सलो विष्णुरुच्यते। ४७१

वत्साना पालनात् वत्सी गोरूपो हरिस्तथा
वत्सभूता. प्रजाश्चेति वत्सो चास्य जगत्पितु। ४७२

रत्नगर्भोऽस्य रत्नानि गर्भभूतानि सागर
"तस्य रूपो हरि स्वोक्त्या" सरसामस्मि सागर। ४७३

धनेश्वर कुबेरात्मा धनानामीश्वर स्वय
भगवद्वचनादेव "वित्तेशो यक्षरक्षसाम्"। ४७४

**धर्मगुब्धर्मकृद्धर्मी सदसत् क्षरमक्षरं**
**अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः।** ६४

श्लो० भा० :-

धर्मान् गोपायतीत्यस्मात् धर्मगुप् सोऽवदत् स्वय
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे। ४७५

धर्माधर्मविहीनोऽपि स्वस्यैवोक्त्यनुसारत
धर्ममेव करोतीति धर्मकृत् हरिरुच्यते। ४७६

धर्माधारतया सोममाधेयान् सकलानपि
धर्मान् धारयतीत्युक्तो धर्मी च हरिरेव स। ४७७

---

टि :-

४६९ नैककर्मकृते नम    ४७० वत्सराय नम
४७१ वत्साशाम्या कामयने इति लच्प्रत्ययस्तद्धित ततो वत्सल इष्टनम – वत्सलाय नम
४७२ वत्सिने नम    ४७३ रत्नगर्भाय नम    ४७४ धनेश्वराय नम
४७५ धर्मगुपे नम.    ४७६ धर्मकृते नम
४७७ धर्मिणे नम

परोपकारनिरत हृदय चास्य शोभन
मित्रार्थे च हृदादेशात् सुहृन्मित्र सतामिति। ४६०

अत्यानन्दस्वरूपत्वात् मनो हरति चेतसो
मनोहर इति प्रोक्तो "यो वै भूमादि" च श्रुते। ४६१

क्रोधोद्येन जितश्चेति जितक्रोधो हि स स्वत
सुरारीन् हन्ति न क्रोधात् धर्मत्राणाय केवलम्। ४६२

वीरो विक्रमशाली च बाहु शूरोचितस्तथा
अस्येति वीरबाहुश्च विष्णुरेव प्रकीर्तित। ४६३

धर्मसंस्थापनार्थाय सर्वांश्चाधार्मिकानपि
विदारयति यन्नाम्नो विदारण इति स्मृत। ४६४

**स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत्**
**वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः॥** ६३

श्लो० भा०:—

मायया स्वापयन्येष प्राणिनश्च करोति तान्
स्वात्मनबोधविधुरान् स्वापनश्चेति कीर्तित। ४६५

स्व आत्मा च वशोऽधीनो यस्य स स्ववशो हरिः
स्वतन्त्रो जगदुत्पत्ति स्थिति प्रलयकर्मसु। ४६६

व्यापी व्यापनशीलत्वात् श्रुत्याचाकाशवत्तथा
कारणत्वेन सर्वेषु कार्येषु व्यापनादपि। ४६७

बिभ्रत् विभूतीर्बह्वीश्च जगत्सृष्ट्यादि कर्मसु
नैकरूपो यथाकाल नैकात्मा चेति कीर्तित। ४६८

---

टि:—

४६० प्रत्युपकारनिरपेक्षतया उपकारित्वात् सुहृत् — सुहृदे नम
४६१ "यो वै भूमा तत् सुखं नाल्पे सुखमस्ति" इति श्रुति — मनोहराय नम
४६२ जितक्रोधाय नम ४६३ वीरबाहवे नम ४६४ विदारणाय नम
४६५ स्वापनाय नम
४६६ स्ववशाय नम ४६७ व्यापिने नम ४६८ नैकात्मने नम

जगत् सृष्ट्या ह्यनेकानि कर्माणि बहुधा स्वय
करोतीति हरिश्चैव कीर्तितो नैककर्मकृत् । ४६९

वत्सरश्चाधिकरणे वसेश्चापि सरन्निति
हरिश्च वत्सरो ह्यस्मिन् वसतीत्यखिल जगत् । ४७०

वत्सासाभ्यां तु लश्चेति वत्सलश्चाधिकप्रिय
स्निह्यतीति च भक्ताश्च वत्सलो विष्णुरुच्यते । ४७१

वत्साना पालनात् वत्सी गोरूपी हरिस्तथा
वत्सभूता. प्रजाश्चेति वत्सी चास्य जगत्पितु । ४७२

रत्नगर्भोऽस्य रत्नानि गर्भभूतानि सागर
"तस्य रूपो हरि स्वोक्त्या" सरसामस्मि सागर । ४७३

धनेश्वर कुबेरात्मा धनानामीश्वर स्वय
भगवद्वचनादेव "वित्तेशो यक्षरक्षसाम्" । ४७४

**धर्मगुब्धर्मकृद्धर्मी सदसत् क्षरमक्षरं**
**अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ।** ६४

स्तो० भा० :-

धर्मान् गोपायतीत्यस्मात् धर्मगुप् सोवदत् स्वय
धर्मसंस्थापनार्थाय सभवामि युगे युगे । ४७५

धर्माधर्मविहीनोऽपि स्वस्यैवोक्त्यनुसारत
धर्ममेव करोतीति धर्मकृत् हरिरुच्यते । ४७६

धर्माधारतया सोयमाधेयान् सकलानपि
धर्मान् धारयतीत्युक्तो धर्मी च हरिरेव स । ४७७

---

टि :-

४६९ नैककर्मकृते नम    ४७० वत्सराय नम
४७१ वत्सासाभ्या कामबले इति लच्प्रत्ययस्ताद्धित ततो वत्सल इष्टनम
  —वत्सलाय नम
४७२ वत्सिने नम    ४७३ रत्नगर्भाय नम    ४७४ धनेश्वराय नम
४७५ धर्मगुपे नम    ४७६ धर्मकृते नम
४७७ धर्मिणे नम

श्रुत्या "सदेव सोम्यद" मवाध्यात्मतया स्वत
यदेवाऽवितथ सत् च पर ब्रह्म प्रकीर्तितम् । ४७८

मायोपाधिकमेवान्यदसत् ब्रह्माऽपर च तत्
वाचारंभणमित्यादिश्रुत्या चापि विकारवत् । ४७९

सर्वभूतमय ब्रह्माप्यसच्चापि च नश्वर
ब्रह्मवच्चापर प्रोक्त क्षर भगवता स्वयम् । ४८०

पर ब्रह्म च कूटस्थ सर्वकारणरूपत
नित्यश्चानश्वर प्रोक्त स्वेनैवाक्षरमेव तत । ४८१

यस्तु ज्ञानमया ज्ञेयो विज्ञाता जीव इत्यत
तदन्य परमा विष्णुरविज्ञाता प्रकीर्तित । ४८२

आदित्यादिगता सर्वेप्यशवोऽस्यैव चेत्यत ।
सहस्रांशुश्च पुरुषोऽसौ श्रुत्या स्मृत्या च कीर्तित ४८३

समस्तभूतधातृस्तु शेषदिग्गज भूधरान्
विशेषेण दधातीति विधाता विष्णुरुच्यते । ४८४

चैतन्यात्मकलक्षण च नियत निष्प्रपमस्येति वा
शास्त्राणीति तु लक्षणानि तु कृतान्येनैव निश्शेषत ।
भावानामपि लक्षण कृतमनेनान्यव्यवच्छेदव
श्रीवत्स कृतलक्षणोस्य तु कृत यल्लक्षण वक्षसि ॥ ४८५

टि:-

४७८ सते नम

४७९ 'वाचारंभण विकारो नामधेय 'मिति श्रुति —असते नम ४८० क्षराय नम

४८१ "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च क्षर सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इति भगवद्वचनात् — अक्षराय नम ४८२ अविज्ञात्रे नम

४८३ 'यन सूर्यस्तपति तेजसेद्ध " इति श्रुत "यदादित्यगत तेज " इति स्मृतेश्च— सहस्रांशवे नम ४८४ विधात्रे नम

४८५ 'नियतनिष्प्रपञ्चस्य यत्स्वरूपम् कृतलक्षण कृतानि लक्षणानि शास्त्राण्यनेनेति वा कृतलक्षण 'वेदा शास्त्राणि विज्ञानमेतत् सर्वं जनार्दना दित्यत्र वक्ष्यति सजातीय विजातीय व्यवच्छेदक लक्षण सर्वभावाना कृतमनेनेति वा— श्रीवत्स लक्षण वक्षसि येन कृतमिति वा कृतलक्षण इति भाष्ये— कृतलक्षणाय नम

गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः
आदिदेवो महादेवो देवेशो देवभृत् गुरुः । ६५

श्लो० भा० -

गावो दिशो ग जगद्वा गभस्तिर्दीपयत्यन
गभस्तिनेमिस्तच्चक्रे मूर्त्यात्मा नेमिवत् स्थित । ४८६

प्रकाशक गुण सत्व प्राधान्येनाधितिष्ठति
सत्वस्थस्तिस्ठतोप्येष सत्वेष्वखिलजीविषु । ४८७

सिंहो विक्रमशालित्वात् सादृश्यव्यपदेशत
नृशब्दलोपतो वापि नृसिंह सिंह एव स । ४८८

महाश्चासावीश्वरश्च भूताना तु महेश्वर
भूत सत्य च तेनैव प्रोक्तो भूतमहेश्वर । ४८९

आदीयन्तेऽखिलान्यस्मिन् भूतानीत्यादिरुच्यते
आदिश्चासौ च देवोपीत्यादिदेव प्रकीर्तित । ४९०

सर्वभावान् परित्यज्य ज्ञानादौ महते महान्
महाश्चासौ च देवोपि महादेवो हरि स्मृत । ४९१

प्राधान्यात् सर्वदेवाना ब्रह्मादीनामपि स्वत
ईशश्चाश्रयभूतत्वात् देवेशो हरिरुच्यते । ४९२

देवान् बिभर्त्तीति धाश्तस्तनुगुरुर्देवभृत् गुरु
देवाना भरणादेव देवभृत् चाप्यसौ गुरु । ४९३

---

टिः-

४८६ भस भर्त्सने दीप्त्यो भसे कर्त्तरि क्विप् इति–गावो दिश ग जगद्वा बिभस्ति दीपयतीति गभस्तिचक्रस्य मध्ये मूर्त्यात्मना नेमिरिव स्थित इति गभस्ति नेमि –गभस्तिनेमये नम

४८७ सत्वस्थाय नम ४८८ सिंहाय नम ४८९ भूतमहेश्वराय नम

४९० आदिदेवाय नम ४९१ महादेवाय नम ४९२ देवेशाय नम

४९३ देवान् बिभर्त्तीति देवभृत् धात्र तस्यापि शासितेति देवभृत् गुरु देवाना भरणात् वा देवभृत्–सर्वविद्याना च निगरणात् गुर देवभृत् चासौ गुरुश्च देवभृत् गुरुर्वा इति– देवभृत् गुरवे नम

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः। ६६

श्लो० भा०:-

उत्तरत्युत्तरो भक्तान् जन्मससारबन्धनात्
सर्वोत्कृष्टोपि वा श्रुत्या "विश्वस्मादिन्द्र उत्तर"। ४९४

गवा च पालनाच्चैव गोपवेपोपि गोपति
गोर्मही च पतिस्तस्या गोपतिर्विष्णुरेव स । ४९५

गोप्ता च सर्वभूताना पालनादपि सर्वथा
रक्षक सर्वजगता विश्वगोप्ता हरि स्मृत । ४९६

कर्मणा ज्ञानकर्मभ्या वाप्य नैव तु गम्यते
किन्तु ज्ञानेन गम्योऽसौ ज्ञानगम्य इतीरित । ४९७

कालेन चापरिच्छिन्न पुरापि भवतीत्यत
पुरातनश्चेति चास्मात् पूर्वोनैकोपि कश्चन। ४९८

शरीरारम्भकाण्येव भूतानि सकलान्यय
शरीरभूतभृत् प्रोक्त प्राणरूपी भरत्यत । ४९९

भोक्ता च विष्णुरेवोक्त पालनात् जगतामपि
परमानन्दसन्दोहसभोगाद्वा प्रकीर्तित । ५००

टि -

४९४ जन्मससारबन्धनादुत्तरतीति उत्तर सर्वोत्कृष्ट इति वा उत्तर-उत्तराय नम

४९५ गवा पालनात् गोपवेषधर गोपति गौर्मही तस्या पतित्वात् गोपतिर्वा-गोपतये नम

४९६ समस्त भूतानि पालयन् रक्षको जगत इति गोप्ता-गोप्त्रे नम

४९७ न कर्मणा न ज्ञानकर्मभ्यां वा गम्यते किन्तु ज्ञानेनैव गम्यते इति ज्ञान गम्य-ज्ञानगम्याय नम

४९८ पुरापि भवति इति पुरातन-पुरातनाय नम

४९९ शरीरारम्भकभूतानां भरणात् प्राणरूपधर शरीरभूतभृत्-शरीरभूतभृते नम

५०० पालयन्यात् भोक्ता परमानन्दसन्दोहसभोगाद्वा भोक्ता-भोक्त्रे नम

कपिवंराहश्चेन्द्रोऽसौ यज्ञवाराह उच्यते
वानराणामपीन्द्रोऽसौ कपीन्द्रो राघवोऽपि वा। ५०१

दर्शयन् धर्ममर्यादा यजमानात्मको यजन्
भूरयो दक्षिणाश्चास्य यज्ञे यन् भूरिदक्षिण। ५०२

**सोमपोऽमृतपः सोमः पुरुजित् पुरुसत्तमः**
**विनयो जयः सत्यसन्धो दाशार्हः सात्वतां पतिः। ६७**

श्लो० भा०:-

यष्टव्यदेवतात्मा वा यजमानात्मको यजन्
दर्शयन् धर्ममर्यादा सोम पिबति सोमप। ५०३

असुरेभ्योऽमृत रक्षन् पाययित्वा सुरांश्च सन्
अपाच्चामृतपो यद्वा स्वात्मामृतरस पिबन्। ५०४

उमया सहित सोम शिवश्चैव शिवात्मक
ओषधी सोमरूपेण पोषयन् सोम एव स। ५०५

पुरूनिति बहूंश्चान दुष्टदानवराक्षमान्
धर्मसंस्थापनार्थाय पुरुजित् जयतीत्यसौ। ५०६

पुरुश्च बहुरूपोऽसौ सता श्रेष्ठस्तु सत्तम
पुरुश्चासौ सत्तमोऽपि पुरुसत्तम उच्यते। ५०७

स्वस्वकर्मानुसारेण प्रजा दण्डयतीत्यत
विष्णुर्विनयशीलत्वस्मात् विनयश्चेति कीर्तित। ५०८

समस्तानि च भूतानि जयतीति विशेषत
पराजितो नैव चेति जया विष्णुरुदाहृत। ५०९

---

टि:-

५०१ कपीन्द्राय नम     ५०२ भूरिदक्षिणाय नम
५०३ सोमपाय नम     ५०४ अमृतपाय नम     ५०५ सोमाय नम
५०६ पुरुजिते नम     ५०७ पुरुसत्तमाय नम     ५०८ विनयाय नम
५०९ जयाय नम

सत्या चावितथा चास्य सन्धा सङ्कल्प उच्यते
सत्यसन्धो हरि श्रुत्या "सत्यसङ्कल्प एव स" ५१०

दाशमर्हति दानार्थं दाशार्हो वृष्णिवशज
गोत्रापत्यतया प्रोक्तो दाशार्हकुलसभव । ५११

सत्वन्तो योगिनस्तेषा तन्त्र यत् सात्वत मत
णिलोप सात्वतस्तेषा रक्षक सात्वता पति । ५१२

## जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः
## अंभोनिधिरनन्तात्मा महोदधिशयोन्तकः। ६८

श्लो० भा०:-

क्षेत्रज्ञरूपी प्राणाश्च धारयन् स्वयमेव यत्
सकलानामपि प्रोक्तो जीवो जीवयतीत्यसौ। ५१३

प्रजाना विनयत्व च साक्षात् पश्यति चेत्यत
प्रोक्ता विनयिता साक्षी पृथङ्नामेति वा स्मृतम् । ५१४

मुक्ति ददाति चेत्युक्तो मुकुन्दो मोक्षदस्तथा
निरुक्तिवचनाच्चैव मुकुन्दो विष्णुरुच्यते। ५१५

अमिताश्चापरिच्छिन्नास्त्रयो वा पादविक्रमा
अमितो विक्रम शौर्यमस्येत्यमितविक्रम । ५१६

---

टि:

५१० सत्यसन्धाय नम ५११ दाशार्हाय नम

५१२ सात्वत नाम तन्त्र "तदूकरोति तदाचष्टे" इतिणिचि कृते क्विप्प्रत्यय णिलोप च कृते पद सात्वत् तेषा पति योगक्षेमकर इति सात्वतापति इति भाष्ये-सात्वतापतये नम

५१३ जीवाय नम

५१४ विनयिता, असाक्षी इति पृथङ्नाम वा नमस्तेनतिवाचिना रूप विनयिता-असाक्षी अगाधादृष्टा आत्मातिरिक्त वस्तु न पश्यतीत्यर्थ –विनयितासाक्षिणे नम पृथङ्नामपक्षे–विनयित्रे नम –असाक्षिणे नम

५१५ अक्षरसाम्यान्निरुक्तिवचनात नैरुक्ताना मुकुन्द इति निरुक्ति इति भाष्य-मुकुन्दाय नम ५१६ अमितविक्रमाय नम

देवा मनुष्या पितरोऽसुराश्चेत्यम्भांसि चत्वारि च विश्रुतानि ।
अस्मिन् निधीयन्त इतीह काले चाम्भोनिधि सागर एव चासौ ॥ ५१७

अनन्तश्चापरिच्छिन्नो देशत कालतोऽपि वा
वस्तुतश्चेति यस्यात्मा सोऽनन्तात्मा प्रकीर्तित । ५१८

महत्य सर्वभूतानि कृत्वा चैकार्णव जगत्
महोदधि चाधिशेते महोदधिशय स्मृत । ५१९

प्रलये सर्वभूताना अन्त चावसितिं च यत्
तत् करोतीति स प्रोक्तश्चान्तको भगवान् हरि । ५२०

## अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः
## आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः । ६९

श्लो० भा० :-

अवनीयश्च विष्णुश्चात् जातोऽयमज उच्यते
विष्णुज नाम इत्यस्मात् कामरूपो ह्यजो हरि । ६२१

मह पूजामर्हतीति देवाद्यैरखिलैरपि
महार्ह सर्वथा पूज्यो विष्णुरेव प्रकीर्तित । ६२२

नित्यनिष्पन्नरूपत्वादनिष्पाद्य स्वभावत
स्वैर्विषाप्यभावस्तु स्वाभाव्यो हरिरुच्यते । ५२३

जिताश्च यत्वोऽमित्रा रागाद्यायेन चान्तरा
बाह्यास्तु रावणाद्याश्च जितामित्र स कीर्तित । ५२४

स्वात्मानन्दरसास्वादान्नित्य यस्तु प्रमादन
प्रमोदयन ध्यानमात्रे ध्यायिनोऽपि प्रमोदन । ५२५

---

टि :-

५१७ 'तानि वा एतानि चत्वार्यम्भांसि देवा मनुष्या पितरोऽसुरा' इति श्रुते सरसामस्मि सागर इति भगवद्वचनात् वा अम्भोनिधि सागर –अम्भोनिधये नम

५१८ अनन्तात्मने नम   ५१९ महोदधिशयाय नम   ५२० अन्तकाय नम

५२१ अजाय नम

५२२ महार्हाय नम   ५२३ स्वाभाव्याय नम   ५२४ जितामित्राय नम

५२५ प्रमोदनाय नम

यश्चानन्दमयात्मासौ हरिश्चानन्द उच्यते
"एतस्यैवोपजीवन्ति" मात्रा भूतानि च श्रुते । ५२६

नन्दनो नन्दयत्येष भगवान् विश्वनन्दन
समृद्ध कुरुते सर्वं जगदेतच्चराचरम् । ५२७

समृद्धो नन्द इत्युक्त सर्वाभिश्चोपपत्तिभि
सुख वैषयिक नास्येत्यनन्दो वा स कीर्तित । ५२८

ज्ञानानन्दादयो धर्मा सत्याश्चावितथा स्वत
अस्येति सत्यधर्मासौ कीर्तितो विष्णुरेव स । ५२९

त्रिलोका येन विक्रान्ता विक्रमैश्च त्रिभिस्तथा
त्रीन् वेदान् क्रमते चेति नमोवेधस्त्रिविक्रम । ५३०

## महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः
## त्रिपदस्त्रिदशाध्यक्षो महाशृंगः कृतान्तकृत् । ७०

श्लो० भा० -

विष्णोश्चावावतार कपिलतनुरसौ तत्वसर्वात्मविज्ञ
साख्य शुद्धात्मतत्त्व विशदमुपदिशश्चास्य चाचार्यवर्यं ।
विख्यातोऽग्रो महाश्चेत्यखिलनिगमदृक् तापसीयो ऋषिश्च
सिद्धाना विष्णुरेष स्वयमपि कपिलाचार्य उक्तो महर्षि ॥ ५३१

---

टिः-

५२६ आनन्दाय नम ५२७ नन्दनाय नम

५२८ नन्दाय नम (अनन्दाय नम इति वा पाठ)

५२९ सत्यधर्मणे नम ५३० त्रिविक्रमाय नम

५३१ महर्षि कपिलाचार्य इति सविशेषणमेकं नाम कृत्स्नस्य वेदस्य दर्शनात् महर्षि महाश्चासौ ऋषिश्च महर्षि 'शुद्धतत्त्वात्मविज्ञानं साख्यमित्यभिधीयते" इति व्यास "ऋषिं प्रसूतं कपिलं महान्तम्" इति श्रुतिश्च । 'सिद्धानां कपिलो मुनि "इति भगवद्वचनाच्च साख्यस्य शुद्धतत्त्वात्मविज्ञानस्याचार्योऽपि कपिलाचार्य — महर्षये कपिलाचार्याय नम

कृतं कार्यं जगत् चात्मा जस्तु जानाति यश्च तत्
कृतं च यत् सोपि चासौ कृतज्ञो जगदात्मकः । ५३२

मधुकैटभमेदोऽभ्याश्चेति भूमिस्तु मेदिनी
तस्याः पतिस्तु विष्णुश्च मेदिनीपतिरुच्यते । ५३३

पदानि त्रीणि सन्त्यस्य त्रैलोक्यक्रमणेऽपि यत्
त्रिपदः कीर्तितः श्रुत्या "पदा त्रीणि विचक्रमे" ५३४

दशास्तिस्रो गुणावेशादवस्था जाग्रदादयः
साक्षीति तासामध्यक्षस्त्रिदशाध्यक्ष उच्यते । ५३५

महाशृङ्गो मत्स्यरूपी यस्य शृङ्गं महच्च सः
नावं बद्ध्वा महच्छृङ्गे चिक्रीडाम्बुनिधौ लये । ५३६

कृतस्य जगतश्चान्तं महान्तं च करोति यः
कृतान्तं चापि मृत्युं वा कृन्ततीति कृतान्तकृत् । ५३७

**महावराहो गोविन्दः सुषेणः कनकाङ्गदी**
**गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ।** ७१

श्लो० भा०:-

अभ्युद्धरन् धरां मग्नामब्धौ चेति महानसौ
महावराहो दिव्योऽसौ वराहस्तु महानिति । ५३८

गोविन्दो विद्यते यो निगमनिगदितैर्गोभिरेवेति वाक्यैः
गा चाविन्दत् स भूमिं सलिलनिधिगतां यज्ञवाराहरूपी ।
गां वाणीं वेदरूपामसुरवरहृतां चाविदत् तं च हत्वा
विन्ते त्रय्यन्तवाणीं पशुकुलमनिशं लोकरक्षां वितन्वन् ।। ५३९

---

टि :-

५३२ कृतज्ञाय नमः  ५३३ मेदिनीपतये नमः  ५३४ त्रिपदाय नमः
५३५ त्रिदशाध्यक्षाय नमः  ५३६ महाशृङ्गाय नमः  ५३७ कृतान्तकृते नमः
५३८ महावराहाय नमः  ५३९ गोभिः निगमनिगदितैः वाक्यैः वेदान्तवाक्यैः यो विद्यते ज्ञायते स एव गोविन्दः गां भूमिं वराहरूपेण, गां वाणीं वेदस्वरूपां वा मत्स्यरूपी अविदत् इति वा गोविन्दः गां त्रैय्यन्तवाणीं सर्ववेदपुराणेतिहासादीं च पशुकुलं वा विन्ते चिन्तयति इति वा गोविन्दः —गोविन्दाय नमः

सुषेण शोभना मना कालदेश गुणात्मिका
सर्गादौ प्रभवेऽप्यस्य कपिवृष्ण्यादिरूपिणी। ५४०

अग च दयते रक्षत्यगदो भूषणात्मक
कनकेन कृतास्तेस्य सन्तीति कनकागदी। ५४१

रहस्योपनिषद्भेद्य सवृतो गुह्य उच्यते
गुहाया हृदयाकाशे निगूढ निहितोपि वा। ५४२

अन्यैश्चाप्यपरिच्छेद्यो ज्ञानैश्वर्यबलादिभि
गभीरश्च विनिर्दिष्टो विष्णुस्तु भगवान् स्वत । ५४३

अभक्तैर्दुष्प्रवेश्यत्वात् भावाऽभावस्वरूपत
अवस्थात्रयसाक्षित्वात् गहनो विष्णुरुच्यते। ५४४

"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते"
इति श्रुत्या तु गुप्तोसौ मनोवाचामगोचर । ५४५

मनस्तत्वात्मक चक्र बुद्धितत्वात्मिका गदा
धारयन् लोकरक्षार्थं विष्णुश्चक्रगदाधर । ५४६

**वेधाःस्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोच्युतः**
**वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः।** ७२

श्लो० भा०:-

सृष्ट्यादि सर्वं विदधाति वेधा दधाति सर्वं च विशेषतो वा
वेधा विधाता विबुधोपि विष्णु पर्यायशब्दैश्च यथार्थनामा। ५४७

---

टि:-

५४० शोभना सेना गुणात्मिका यस्येति सुषेण रामावतारे सुग्रीवहनुमदादि वानरसेना, कृष्णावतारे वृष्णियादवादिसेनेत्यदि–सुषेणाय नम

५४१ कनकाङ्गदिने नम ५४२ गुह्याय नम ५४३ गभीराय नम

५४४ गहनाय नम ५४५ गुप्ताय नम ५४६ चक्रगदाधराय नम

५४७ वेधसे नम

अग तु सहकारी च यस्य सृष्ट्यादिकर्मसु
स्वमेवात्मेति म स्वाङ्गो विष्णुरेव प्रकीतित । ५४८

स्वस्यैव चावतारेषु मत्स्यकूर्मादिकेष्वपि
न जितो जातु केनापि विष्णुश्चाजित उच्यते। ५४९

कृष्णद्वैपायन कृष्णो व्यासात्मा च स्मृतिर्यथा
"कोह्यन्य पुण्डरीकाक्षात् महाभारतकृत् भवेत्"। ५५०

स्वरूपसामर्थ्यादीना विच्युतिर्न भवेत् क्वचित्
यस्य चासौ दृढश्चेति विश्रुतो विष्णुरेव स । ५५१

संहारे तु प्रजा सर्वा यश्च सङ्कर्षणीत्यसौ
स्वरूपान्न च्युतश्चासावपि सङ्कर्षणोच्युत । ५५२

रश्मिसंवरणात् भानुर्वरुण मायमागत
"इम मे वरुणश्रुधी हव" चेति च मन्त्रत । ५५३

वीयते प्रार्थ्यते चेति वरणस्तु जलाधिप
तस्यापत्यमगस्त्यो वा वसिष्ठो वारुणो हरि । ५५४

श्रुत्या "वृक्ष इव स्तब्धो दिवितिष्ठति" चेत्यत
अचलात्मतया विष्णुर्वृक्षो वृक्ष इव स्थित । ५५५

पुष्कर व्योमचाश्नोति व्याप्नोतीति हृदबुजे
प्रकाशते चिन्तितो वा पुष्कराक्ष स्वरूपत । ५५६

"मनसैव जगत्सृष्टि सहार च करोति य"
इति स्मृत्यनुसरेण प्रोक्तश्चासौ महामना । ५५७

---

टि :-

५४८ स्वाङ्गाय नम ५४९ अजिताय नम

५५० कृष्णाय नम

५५१ दृढाय नम ५५२ सङ्कर्षणाय अच्युताय नम

५५३ वरुणाय नम ५५४ वारुणाय नम ५५५ वृक्षाय नम

५५६ पुष्करमाकाश अश्नोति व्याप्नोति इति पुष्कराक्ष यद्वा पुष्करे हृदयपुण्डरीके व्याप्नोति चिन्तितरूपेण प्रकाशत इति पुष्कराक्ष पुष्करे इवाक्षिणी यस्य स पुष्कराक्ष इति वा – पुष्कराक्षाय नम ५५७ महामनसे नम

भगवान् भगहाऽनन्दी वनमाली हलायुधः
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः। ७३

श्लो० भा० :-

"उत्पत्ति प्रळय चैव भूतानामागति गति
वेत्ति विद्यामविद्या च भगवानिति" स स्मृते । ५५८

ऐश्वर्यादीन् समस्तांश्च सहारसमये भगान्
हन्तीति भगहा प्रोक्तो भगवानपि च स्व यम् । ५५९

स्वस्यानन्दस्वरूपत्वादानन्दी विष्णुरुच्यते
सर्वं सपत् समृद्ध्या वा नन्दी नन्दप्रियोथवा । ५६०

वनमाला वैजयन्ती भूत तन्मात्र निर्म्मिता
वहतीति हरिश्चामो वनमाली प्रकीर्तित । ५६१

हलमायुधमस्येति हलायुध इति स्मृत
बलभद्राकृति सोय विष्णुरेवेति विश्रुत । ५६२

आदित्या काश्यपाज्जातो वामनो य स्वरूपत
विष्णुरेव स्वय चासावादित्य इति च स्मृत । ५६३

अदित्यो ज्योतिरीत्यत्र स्थित सवितृमण्डले
विष्णुरेव स्वरूपत्वात् ज्योतिरादित्य उच्यते । ५६४

द्वन्द्वानि सकलान्येव शीतोष्णादीनि सर्वथा
सहते चेति विष्णुर्हि सहिष्णुर्वा प्रकीर्तित । ५६५

गतामप्युत्तम श्रेष्ठ सत्तमश्चेत्यसावपि
मुमुक्षूणा च गम्योपि गतिश्च गतिसत्तम । ५६६

---

टि:-

५५८ ऐश्वर्यस्य समग्रस्य धर्मस्य यशस श्रिय ज्ञान वैराग्ययो श्चैव षण्णा भग इती रणा" इति विष्णुपुराणे–षड्भगाश्चास्य सन्तीति भगवान् – भगवते नम

५५९ भगघ्ने नम ५६० आनन्द स्वरूपत्वात् सर्व सपत् समृद्धया वा आनन्दी–नन्दप्रियो नन्दी इति वा पाठ – आनन्दिने नम (नन्दिने नम)

५६१ वनमालिने नम

५६२ हलायुधाय नम ५६३ आदित्याय नम ५६४ ज्योतिरादित्याय नम

५६५ सहिष्णवे नम ५६६ गति सत्तमाय नम

सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः
दिविस्पृक् सर्वदृक् व्यासो वाचस्पतिरयोनिजः । ७४

श्लो० भा०:-

इन्द्रियादिमय यच्च शार्ङ्गं नाम सुशोभन
धनुरस्यास्ति चेत्युक्त सुधन्वा विष्णुरेव स । ५६७

शत्रूणा खण्डनात् खण्ड परशुश्चास्ति चायुध
अस्येति खण्डपरशुर्जामदग्न्यो हरि स्मृत । ५६८

सज्जनाना हितार्थं च दुर्जनानामशेषत
दारुणत्वाद्दारुणोसौ दुष्टनिग्रहतत्पर । ५६९

भक्तेभ्यो द्रविण सर्वं वाञ्छित प्रददाति य
द्रविणप्रद इत्युक्तो विष्णुर्भक्तजनप्रिय । ५७०

दीव्यन्त्यत्र च सर्वेऽपि द्यौ स्वर्गश्चापि सज्ञया
त्रिविक्रमो दिविस्पृक् य पस्पर्श स्वपदा दिवम् । ५७१

सर्वा व्यस्यति वा दृशश्च सकलज्ञानानि विस्तारयन्
सर्वेषामपि सर्वरूपमपि वा ज्ञान च दृक् सर्वदृक् ।
व्यास्यत् वेदपुराणपुण्यनिवहान् व्यासोप्यसौ सर्वदृक्
व्यासश्च प्रथितोपि विश्वविदितो विज्ञानविज्ञापक ॥ ५७२

योनिजो जायते योन्या तदन्यश्चाप्ययोनिज
पतिर्वाचोपि विद्याया वाचस्पतिरयोनिज । ५७३

---

टिः-

५६७ सुधन्वने नम ५६८ अखण्ड परशुरस्येत्यखण्डपरशुरिति वा पाठ—खण्डपरशवे नम (अखण्डपरशवे नम)

५६९ दारुणाय नम ५७० द्रविणप्रदाय नम ५७१ दिविस्पृशे नम

५७२ सर्वा दृश सर्वेषा दृश वा सर्वदृश सर्वज्ञानानि विस्तारयतीति सर्वदृक् व्यास सर्वा च सा दृक् चेति सर्वदृक् सर्वाकार ज्ञानस्वरूप ब्रह्म-सर्वा दृश वेदेतिहासपुराणादीनि व्यास्यत् विस्तारयामास इति व्यास सर्वदृक् चासौ व्यासश्च सर्वदृक् व्यास ऋग्वेदादिविभागेन चतुर्धा वेदा व्यस्ता कृता आद्य एकविंशतिधा, द्वितीय एकोत्तरशतधा, साम सहस्रधा, अथर्ववेदो नवधा शाखादिभेदेन कृत इति—सर्वदृक्व्यासाय नम

५७३ वाचस्पतये अयोनिजाय नम

त्रिसामा सामगः साम निर्वाणं भेषजं भिषक्
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम्। ७५

श्लो० भा०:-

देवव्रतसमाख्यातै सामगै संस्तुतोपि य
सामभिश्च त्रिभिश्चेति त्रिसामा स हरि स्मृत । ५७४

सामप्रिय सामवेद साम गायति चेत्यत
सामग कीत्तितश्चासौ वेदगानप्रियो हरि । ५७५

सामवेदस्वरूपत्वात् साम इत्युच्यते हरि
"वेदाना सामवेदोऽस्मी"त्युक्त भगवता स्वयम्। ५७६

परमानन्दरूपञ्च सर्वदु खशमात्मक
यच्च तत् परम ब्रह्म निर्वाण तत् प्रकीर्तितम्। ५७७

ससार रोगशमन चौषध भिषजामिद
भेषज चेति भगवान् विष्णुरेव प्रकीर्तितम् । ५७८

"भिषक्तम त्वा भिषजा शृणोमी"ति श्रुतेभिषक्
ससाररोगमुक्त्यर्थं परा विद्यामुपादिशत्। ५७९

सन्यासकृच्च सन्यास कृतवानिति चाश्रम
मोक्षार्थं च मुमुक्षूणा चतुर्थं हरिरेव स । ५८०

प्राधान्येन यतीना च प्रशम ज्ञानसाधन
आचष्टेति च भूताना शम शमयिता हरि । ५८१

असङ्गत्वात् सुखेष्वेव शान्तश्चेति प्रकीर्तित
"निष्कल निष्क्रिय शान्त" इत्यादि श्रुतिमन्त्रत । ५८२

निष्ठन्ति नितरामस्मिन् सर्वभूतानि सङ्क्षयो
निष्ठा चेति तत प्रोक्तो वैष्णवी देवतापि सा। ५८३

---

टि:-

५७४ त्रिसाम्ने नम ५७५ सामगाय नम ५७६ साम्ने नम ५७७ निर्वाणाय नम
५७८ भेषजाय नम ५७९ भिषजे नम ५८० सन्यासकृते नम
५८१ यतीनां प्रशमः धर्मो नियमो वनवासिना दानमेव गृहस्थाना, शुश्रूषा ब्रह्मचारिणां इति स्मृते –शमाय नम
५८२ शान्ताय नम ५८३ निष्ठायै नम

समस्तानामविद्याना निवृत्ति सर्वथापि या
शान्तिश्च कीर्तिता सा च परा, ब्रह्मैव च स्मृता । ५८४

पुनरावृत्तिराहित्यादुत्कृष्टमयन पर
परञ्चायनमस्येति स्थान चापि परायणम् । ५८५

**शुभांगः शान्तिदः स्रष्टा कुमुदः कुवलेशयः**
**गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ।** ७६

श्लो० भा०:-

शुभानि शोभनान्यस्य सुन्दराण्यनुरूपत
अङ्गानि सकलानीति शुभाग प्रियदर्शन । ५८६

रागद्वेषाद्यरीन् सर्वान् विजेतुमपि च क्षमा
शान्ति ददाति यश्चासौ शान्तिदो विष्णुरुच्यते । ५८७

सर्गादौ सर्वभूतानि ससर्ज च यथाक्रम
माययापि हरिश्चासौ स्रष्टा चेति प्रकीर्तित । ५८८

कायते भूयते चेति कुश्च भूमि प्रकीर्तिता
तस्या च मोदते चासौ कुमुदो विष्णुरुच्यते । ५८९

कोर्भूम्या वलनाच्च सवरणतश्चाब्धेर्जल चेति यत्
शेतेऽस्मिन् कुवलेऽपि यत्तु वलते भूम्या तु शेषोदरे ।
शेते वा बदरीफलस्य कुवलस्यान्तस्तु यस्तक्षक
सारूप्यात् कुवलेशयोऽपिशयन शेषेणयश्चात्मना ॥ ५९०

---

टि:-

५८४ शान्त्यै नम ५८५ पुनरावृत्तिराहित्यात् उत्कृष्ट पर अयन परायण पुल्लिगपक्षे बहुव्रीहि —परायणाय नम

५८६ शुभागाय नम

५८७ शान्तिदाय नम ५८८ स्रष्ट्रे नम ५८९ कुमुदाय नम

५९० कोर्भूम्या पालनात् सवरणात् कुवलमब्धि को भूम्या वलते सवयन इति कुवल सर्पोदर अर्थात् शेषोदर, कुवल बदरीफल इति त्रिविधार्थे कुवले शेत इति कुवलेशय सर्वत्राब्धिशायी शेषशायी च हरि कुवले बदरीफले शयस्तु तक्षक सोपि तस्य विभूतिरिति वा हरि —कुवलेशयाय नम

गवां क्षेमाय धृतवान् यस्तु गोवर्द्धनं तथा
गोर्भूमेर्भारहरणात् गोहित प्रभवे स्वके । ५९१

गोर्भूम्याश्च पतिश्चेति गोपतिर्धर्मपालनात्
दुष्टनिग्रहणाच्चैव शिष्टसंरक्षणादपि । ५९२

जगत्संरक्षणादेव गोप्ता च हरिरुच्यते
स्वमायया संवृणोति स्वात्मानमपि वा स्मृत । ५९३

वर्षुके सकलान् कामान् वृषभाक्षोऽस्य चाक्षिणी
वृषभो धर्म एवाक्षो दृष्टिरस्येति वा स्मृत । ५९४

वृषो धर्मः प्रियोऽस्येति यद्वा परनिपातन
वृषश्चासौ प्रियश्चेति प्रोक्तो वापि वृषप्रिय । ५९५

**आनिवर्त्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः**
**श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ।** ७७

श्लो० भा० :-

देवासुराणां समरात् नैव यासौ निवर्तते
अनिवर्तीति वा यस्मात् धर्माद्वा न निवर्तते । ५९६

आत्मा मनो निवृत्तोऽस्य विषयेभ्यः स्वभावतः
निवृत्तात्मा तु भगवान् विष्णुरेव प्रकीर्तित । ५९७

विस्तृतं च जगत्सर्वं महाप्रलये यत
संक्षिपन् सूक्ष्मरूपेण संक्षेप्ता विष्णुरुच्यते । ५९८

उपात्तस्याखिलस्यापि रक्षार्थं करोति यत्
सर्वक्षेमकरोऽतेति क्षेमकृत् भगवान् हरि । ५९९

---

टि:-

५९१ गोहिताय नम  ५९२ गोपतये नम  ५९३ गोप्त्रे नम
५९४ वृषभाक्षाय नम  ५९५ वृषप्रियाय नम  ५९६ अनिवर्तिने नम
५९७ निवृत्तात्मने नम  ५९८ संक्षेप्त्रे नम  ५९९ क्षेमकृते नम

स्वनामस्मृतिमात्रेण सर्वान् पावयतीत्यत
प्रोक्तस्तु भगवान् विष्णु शिवश्चान्वर्थनामक । ६००

श्रीवत्सवक्षा श्रीयुक्तो वत्म श्रीवत्स सज्ञित
रोमावर्त्तोऽस्य चिन्ह यत् नित्य वक्षसि सस्थितम् । ६०१

श्रयने सेवते विष्णु श्रीश्च या श्रीयंत्यखिलै
श्रीवासो वसतीत्यस्य श्रीर्वक्षस्यनपायिनी । ६०२

दुग्धाब्धिमथने सर्वान् विहायामौ वृत श्रिया
तमश्च श्रीपतिर्यद्वा पराशक्त्या श्रिय पति । ६०३

श्रीश्च वेदात्मिका येषा तेषा च श्रीमता तथा
ब्रह्मादीना वरश्चेति प्रधान श्रीमता वर । ६०४

**श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः**
**श्रीधरः श्रीकरः श्रेयः श्रीमान् लोकत्रयाश्रयः।** ७८

श्लो० भा० :-

श्रिय ददाति भक्तेभ्य परमानन्दलक्षणा
श्रीद म कीर्तितो विष्णुर्भक्ताभीष्टफलप्रद ६०५

महालक्ष्म्या श्रियश्चेति परात्मवयास्तु वा स्वय
वेदात्मिकायाश्चेशोऽसौ श्रीशो विष्णुस्तु कीर्तित । ६०६

श्रीमन्तो लक्षिताश्चात्र श्रीमच्छब्देनेति तेष्वपि
नित्य वसति सर्वेषु श्रीनिवास प्रकीर्तित । ६०७

---

टि :-

६०० शिवाय नम ६०१ श्रीवत्सवक्षसे नम

६०२ या विष्णु श्रयते मा श्री या सर्वैरपि श्रीयते मापि श्री ता श्री यस्य वक्षसि वसति स श्रीवास –श्रीवासाय नम

६०३ 'पराम्य शक्तिर्विविधैव श्रूयते' इति श्रुते –श्रीपतय नम

६०४ श्रीमता वराय नम

६०५ श्रीदाय नम ६०६ श्रीशाय नम ६०७ श्रीनिवासाय नम

अखिलाश्च श्रियो यस्मिन् सर्वशक्तिमयेऽपि यत्
निधीयन्तेऽनिश चेति श्रीनिधि स हरि स्मृत । ६०८

स्वस्वकर्मानुसारेण श्रियस्तु विविधास्तु य
विभावयति भूताना प्रोक्तोऽसौ श्रीविभावन । ६०९

श्रिय च सर्वभूताना जननी धरते तु य
स्ववक्षसि सदैवेति श्रीधरोऽसौ प्रकीर्तित । ६१०

स्मरता स्तुवता चापि भक्तानामर्चतामपि
श्रिय च सकलामेव करोति श्रीकर स्मृत । ६११

अनपायि सुखावाप्तिलक्षण श्रेय इष्यत
तत् प्रशस्यतम श्रेय पर ब्रह्म इहोच्यते। ६१२

पराशक्तिश्च लक्ष्मीश्च वेदाद्याश्च श्रियोऽखिला
अस्य सन्तीति नित्य च श्रीमाश्च श्रीमतावर । ६१३

लोका सर्वत्र लोचयन्ते चाश्रयन्त्येनमाश्रय
लोकत्रयस्याश्रयोऽसौ प्रोक्तो लोकत्रयाश्रय । ६१४

## स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः
## विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः। ७९

श्लो० भा०:-

पुण्डरीकदलाभे च शोभने चाक्षिणी स्वत
अस्येति यद्दर्शनीये स्वक्षश्चेति प्रकीर्तित । ६१५

शोभनान्यस्य चाङ्गानि सुन्दराण्यखिलान्यपि
प्रियदर्शनरूपत्वात् स्वङ्गश्च हरिरुच्यते। ६१६

---

टि:-

| | | |
|---|---|---|
| ६०८ श्रीनिधये नम | ६०९ श्रीविभावनाय नम | ६१० श्रीधराय नम |
| ६११ श्रीकराय नम | ६१२ श्रेयसे नम | ६१३ श्रीमते नम |
| ६१४ लोकत्रयाश्रयाय नम | ६१५ स्वक्षाय नम | ६१६ स्वङ्गाय नम |

परमानन्दरूपोऽस्य शतधोपाधिभेदत
भिद्यते चैक एवेति शतानन्द प्रकीर्तित. । ६१७

नद्यर्योपि समृद्धिश्च हर्षं यत् पर्यवस्यति
नन्दिस्तत् परमानन्दविग्रहो विष्णुरुच्यते । ६१८

ज्योतिर्गणस्येश्वरोऽसौ भास्वान् ज्योतिर्गणेश्वर
"यदादित्यगत तेज" स्मृत्या श्रुत्यापि कीर्त्तित । ६१९

येन चात्मा मन सम्यक् विजित स्ववशीकृत
विजितात्मा विश्रुतोऽसौ विष्णुरेव तु सर्वथा । ६२०

कर्तु न शक्योऽविधेय केनाप्यात्माऽस्य च स्वत
स्वरूपमविधेयात्मा हरिरेव प्रकीर्त्तित । ६२१

सती चाविततया कीर्त्तिरस्येति सतनात्मिका
विख्यातो विष्णुरेवासौ सत्कीर्त्तिरिति कीर्त्तित । ६२२

छिन्नाश्च सशया सर्वं साक्षात् कृतवतोऽखिल
मुत्स्पष्टमस्य विज्ञानात् प्रोक्तोऽसौ छिन्नसशय । ६२३

**उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः**
**भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ।** ८०

---

टि :-

६१७ "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुते – शतानन्दाय नम

६१८ परमानन्दविग्रहो नन्दि इति भाष्य – नन्दये नम

६१९ "तमेव भान्तमनुभाति सर्वं" इति श्रुतेश्च "यदादित्यगत तेज" इति भगवद्वचनाच्च – ज्योतिर्गणेश्वराय नम

६२० विजितात्मने नम

६२१ अविधेयात्मने नम ६२२ सत्कीर्तये नम

६२३ करतलामलकवत् सर्वं साक्षात् कृतवत क्वापि सशयो नास्तीति छिन्नसशय – छिन्नसशयाय नम

श्लो० भा० :–

उत्पूर्वात् ऋगतौ धातोरुदीर्णश्चोद्गतस्तथा
सर्वभूतेभ्य उद्रिक्त सम्यक् चोदीर्ण उच्यते। ६२४

स्वचैतन्येन सर्वं च सर्वत पश्यतीत्यसौ
श्रुत्युक्तो "विश्वतश्चक्षु" सर्वतश्चक्षुरेव स। ६२५

"न तस्येश कश्चनेति" श्रुतिमन्त्रानुसारत
ईशो न विद्यते यस्य प्रोक्तश्चानीश एव स। ६२६

शश्वत् भवत् शाश्वतोपि स्थिरो नोपैति विक्रिया
शाश्वतश्च स्थिरश्चासौ शाश्वतस्थिर उच्यते। ६२७

मार्गमन्वेपयन् लङ्का प्रति सागरमेत्य य
भुवि शेते ततश्चासौ भूशयश्चेति कीर्तित। ६२८

बहुभि स्वावतारैश्च स्वेच्छयैवाखिलामपि
भूमिं च भूपयन्नेष भूषणो विष्णुरुच्यते। ६२९

भूतिस्तु भवन सत्ता भूतिश्चैश्वर्यमेव वा
तद्धेतुस्तत्स्वरूपो वा भूति सर्वविभूतिमान्। ६३०

परमानन्दरूपत्वात् शोको निश्शेषमेव च
सर्वथा विगतोऽस्येति विशोको विष्णुरुच्यते। ६३१

स्मृतिमात्रेण भक्तानामशेष स्वयमेव यत्
शोक नाशयतीत्येष प्रोच्यते शोकनाशन। ६३२

**अर्चिष्मानर्चितः कुंभो विशुद्धात्मा विशोधनः**
**अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः।** ८१

---

टि:–

६२४ उत्पूर्वात् ऋगतौ धातो कर्तरि क्त ऋत इद्धातोरिलीन् रदाभ्यामिति न हलि चेति दीर्घं तस्य णत्व इति उदीर्णं उद्रिक्त उद्गत – उदीर्णाय नम

६२५ सर्वतश्चक्षुषे नम ६२६ अनीशाय नम

६२७ शाश्वतस्थिराय नम ६२८ भूशयाय नम ६२९ भूषणाय नम

६३० भूतये नम ६३१ विशोकाय नम ६३२ शोकनाशनाय नम

श्लो० भा० :-

उत्पूर्वात् ऋगतौ धातोरुदीर्णश्चोद्गतस्तथा
सर्वभूतेभ्य उद्रिक्त सम्यक् चोदीर्ण उच्यते। ६२४

स्वचैतन्येन सर्वं च सर्वत पश्यतीत्यसौ
श्रुत्युक्तो "विश्वतश्चक्षु" सर्वतश्चक्षुरेव ॥। ६२५

"न तस्येश कश्चनेति" श्रुतिमन्त्रानुसारत
ईशो न विद्यते यस्य प्रोक्तश्चानीश एव स। ६२६

शश्वत् भवत् शाश्वतोपि स्थिरो नोपैति विक्रिया
शाश्वतश्च स्थिरश्चासौ शाश्वतस्थिर उच्यते। ६२७

मार्गमन्वेषयन् लङ्का प्रति सागरमेत्य य
भुवि शेते तनश्चासौ भूशयश्चेति कीर्तित। ६२८

बहुभि स्वावतारैश्च स्वेच्छयैवाखिलामपि
भूमिं च भूषयन्नेष भूषणो विष्णुरुच्यते। ६२९

भूतिस्तु भवन सत्ता भूतिश्चैश्वर्यमेव वा
तद्धेतुस्तत्स्वरूपो वा भूति सर्वविभूतिमान्। ६३०

परमानन्दरूपत्वात् शोको निश्शेषतैव च
सर्वथा विगतोऽस्येति विशोको विष्णुरुच्यते। ६३१

स्मृतिमात्रेण भक्तानामशेष स्वयमेव यत्
शोक नाशयतीत्येष प्रोच्यते शोकनाशन। ६३२

अर्चिष्मानर्चितः कुंभो विशुद्धात्मा विशोधनः
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः। ८९

---

टि:-

६२४ उत्पूर्वात् ऋगतौ धातोः कर्तरि क्त ऋत इद्धातोरिति इत्वम् रदाभ्यामिति न रनि चेति दीर्घ तस्य णत्व इति उदीर्ण उद्रिक्त उद्गत — उदीर्णाय नम

६२५ सर्वतश्चक्षुषे नम ६२६ अनीशाय नम

६२७ शाश्वतस्थिराय नम ६२८ भूशयाय नम ६२९ भूषणाय नम

६३० भूतय नम ६३१ विशोकाय नम ६३२ शोकनाशनाय नम

श्लो० भा०:-

निजघानासुर यत्तु कालनेमि च दुष्कर
कालनेमिनिहा चेति प्रथितो विष्णुरेव स । ६४२

विक्रान्तश्चासुरान् हत्वा वीर शूरोपि वा स्मृत
शौरि शूरश्चेति पाठ केरळेष्वादृत स्वत । ६४३

वसुदेवपिता शूरस्तस्य चापत्यसज्ञया
वासुदेवोपि स प्रोक्त शौरि शूरकुलोद्भव । ६४४

शूरा जना वासवाद्या ये तेषामपि चेश्वर
यच्छौर्यातिशयेनेष्ट प्रोक्त शूरजनेश्वर । ६४५

त्रयाणामपि लोकाना अन्तर्यामितया स्वत
भिद्यन्तेऽस्मान्न ते चेति त्रिलोकात्मा हरि स्मृत । ६४६

त्रयो लोकास्तदाज्ञप्ता वर्तन्ते स्वस्वकर्मसु
यथा तेषामधीशोसौ त्रिलोकेश प्रकीर्तित । ६४७

को ब्रह्मापि शिवश्चेश केशावस्येति केशव
त्रिमूर्तिशक्तय केशा ज्योतिषामशवोऽस्य यत् । ६४८

केशाश्च कुत्सिता यस्य केशीत्यसुरमेव त
हतवानिति स प्रोक्त केशिहा भगवान् हरि । ६४९

सहेतुक च ससार हरतीति यथाक्रम
हविषो हरणाद्वापि वर्णतो वा हरि स्मृत । ६५०

---

टि:-

६४२ कालनेमिनिघ्ने नम ६४३ शूराय नम (शौराय नम)

६४४ शौरये नम ६४५ शूरजनेश्वराय नम ६४६ त्रिलोकात्मने नम

६४७ त्रिलोकेशाय नम

६४८ "अशवो ये प्रकाशन्ते मम ते केशसज्ञिता सर्वज्ञा केशव तस्मात् मामाहुर्द्विज सत्तमा" इति शान्तिपर्वणि ब्रह्मविष्णुशिवाख्या शक्तय केशसज्ञिता तद्वत्तया वा केशव "त्र्यकेशिन" इति श्रुते "मन् केशो वसुधातले" इति केशशब्द शक्तिपर्यायत्वेन प्रयुक्त "को ब्रह्मेति समाख्यात ईशोऽह सर्वदेहिन आवा तवाङ्गसभूतौ तस्मात् केशवनामवान् इति हरिवशे – केशवाय नम

६४९ केशिघ्ने नम ६५० हरये नम

कामदेवः कामपालः कामी कान्तः कृतागमः
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः। ८३

श्लो० भा० -

धर्माद्यान् पुरुषार्थान् स काम्यते काम इत्यसौ
दीव्यतेऽपि च देवोऽपि कामदेव प्रकीर्तित । ६५१

काम्यमानस्य कामं कामिनामखिलानपि
कामान् पालयतीत्येव कामपालो हरि स्मृत । ६५२

पूर्णकामस्वरूपत्वात् कामोऽस्यास्त्यखिल च यत्
कामीति विबुधं सर्वविष्णुरेव प्रकीर्तित । ६५३

अभिरूपतम देव कान्तस्तु बहुनीति यत्
यस्य तु ब्रह्मणोऽप्यन्त काल्येऽस्मात् कान्त एव स । ६५४

आगम्यते ज्ञायते च धर्माद्यागम एव यत्
श्रुतिस्मृत्यादि सर्वं च कृत येन कृतागम । ६५५

इद तदीदृगित्यादि निर्देष्टु नैव शक्यते
अनिर्देश्य वपुर्यस्येत्यनिर्देश्यवपु स्मृत । ६५६

कान्तिरभ्यधिका चास्य भुवन व्याप्य संस्थिता
स तु सङ्क्रमणाद्वापि विष्णुरित्यभिमन्त्रित । ६५७

रात्यादत्ते वियो वीर ईर्ते प्राप्नोति वा तथा
वीयतोर्वीर्गतिव्याप्ति कान्त्याद्यर्थश्च यत् स्मृत । ६५८

टि:-

---

६५१ कामदेवाय नम

६५२ कामपालाय नम ६५३ कामिने नम ६५४ कान्ताय नम

६५५ कृतागमाय नम

६५६ अनिर्देश्यवपुषे नम ६५७ विष्णवे नम

६५८ "वी गतिव्याप्ति प्रजनकान्त्यसन खादनेषु" इति धातुपाठात् वी गत्यादि वियो गत्यादीन् रात्यादत्त इति वीर यद्वा वियोगत्यादीन् ईर्ते प्राप्नोतीति वीर – वीराय नम

महाश्चाप्युरगश्चासौ महोरग इति स्मृत
सर्वात्मा स्वेन चोक्त च "सर्पाणामस्मि वासुकि"। ६७४

महाश्चासौ क्रतुश्चेति महाक्रतुरुदाहृत
"यथाश्वमेध क्रतुराडि"त्याद्यपि च सस्तुत। ६७५

यज्ञान् निवर्त्तयन् यज्वा लोकसग्रहणार्थकान्
महाश्चासौ च यज्वा च महायज्वा प्रकीर्तित। ६७६

महाश्चासौ च यज्ञश्च महायज्ञो हरि स्मृत
यज्ञाना जपयज्ञोस्मीत्युक्तो यज्ञात्मक स्वयम्। ६७७

महद्धविश्चार्पित यत् भक्तैरस्य महाहवि
सर्व जगत् लये चास्मिन् हूयते परमात्मनि। ६७८

स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः
पूर्णः पूरयिता पुण्यः पुण्यकीर्त्तिरनामयः। ८६

श्लो० भा० :-

कस्यचिद्वा नहि स्तोता किन्तु सर्वैश्च सर्वदा
स्तूयते चेति स प्रोक्त स्तव्यो य स्तवमर्हति। ६७९

स्तोतृणा स्तवनीयानां स्तवानामपि चास्ति यत्
सर्वथा प्रियमस्येति प्रोक्तश्चासौ स्तवप्रिय। ६८०

गुणस्वरूपभावादि कीर्तनात्मकमेव यत्
स्तूयते येन तत् स्तोत्र स्तोत्रात्मा हरिरेव ॥। ६८१

स्तवनक्रिया स्तुतिश्चेति तदात्मापि हरिस्तथा
स्तुतो वा स्तोत्रविषयश्चेति पाठोऽत्र दृश्यते। ६८२

---

टि :-

६७४ महोरगाय नम ६७५ महाक्रतवे नम ६७६ महायज्वने नम
६७७ महायज्ञाय नम ६७८ महाहविषे नम
६७९ स्तव्याय नम ६८० स्तवप्रियाय नम ६८१ स्तोत्राय नम
६८२ स्तुति स्तवनक्रिया इति मुद्रितभाष्ये, स्तुत इति पाठोपि दृश्यते–स्तुतये नम (स्तुताय नम)

स्तुतिकर्ता च एवेति स्तोता च हरिरुच्यते
स्तव्यस्तोत्रस्तुतिस्तोतृादि सर्वात्मक स्मृत । ६८३

प्रियो रणो यस्य येन यते चक्रायुधानि च
सतत लोकरक्षार्थं प्रोक्तआतो रणप्रिय । ३८४

शक्तिभि सकलाभिश्च कामैश्च सकलैरपि
सदाश्च सर्वथा येन पूर्णस्तु हरिरुच्यते । ६८५

न केवल पूर्ण एव किन्तु पूरयिताऽपि स
सर्वेषा पूरणाद्देव सम्पद्भिरखिलैरपि । ६८६

स्मृतिमात्रेण भक्ताना सम्यपाप्यखिलान्यपि
क्षपयन्नेव पुण्योऽपि विष्णुरेव प्रकीर्तित । ६८७

पुण्यमावहनीयस्य कीर्तिरेव नृणामिति
पुण्या च कीर्तिरस्येति पुण्यकीर्तिरिति स्मृत । ६८८

आमयैरान्तरैर्बाह्यै कर्मजैर्व्याधिभिस्तथा
पीड्यते न कदापीति प्रोक्तो विष्णुरनामय । ६८९

## मनोजवस्तीर्थकरो वसुरेता वसुप्रदः
## वसुप्रदो वासुदेवो वसुर्वसुमना हविः । ८७

श्लो० भा०:-

मनसो जवेन तुल्योऽस्य जवो वेगोऽस्ति येत्यत
मनोजव कीर्तितोऽसौ सर्वव्यापितया स्वत । ६९०

तरत्यनेन चाज्ञान तीर्थं शास्त्रमतोपत
वेदवेदाङ्गशास्त्रादि कर्त्ता तीर्थकरो हि स । ६९१

---

टि :-

६८३ स्तोत्रे नम    ६८४ रणप्रियाय नम    ६८५ पूर्णाय नम
६८६ पूरयित्रे नम    ६८७ पुण्याय नम    ६८८ पुण्यकीर्तये नम
६८९ अनामयाय नम    ६९० मनोजवाय नम

६९१ चतुर्दशविद्याना बाह्यविद्या समयाना च प्रणेता प्रवक्ता, चेति तीर्थंकर हयग्रीवरूपेण मधुकैटभौ हत्वा विरिञ्चाय सर्गादौ सर्वा श्रुतीरन्याश्च विद्या उपदिशन् वेदबाह्या विद्या सुरवैरिणा वञ्चनाय चोपदिदेशेति पौराणिका कथयन्ति इति भाष्ये–तीर्थंकराय नम

गुवर्णं वसुरेतोप्सु सिक्तमण्ड हिरण्मय
ब्रह्मण कारण चास्य वसुरेतास्तत स्मृत । ६९२

वस्वास्य च घन सर्वं प्रकर्षेण ददाति यत्
साक्षाद्यस्तु घनाध्यक्षप्रोक्तश्चासो वसुप्रद । ६९३

प्रददाति च भक्तेभ्यो वसु मोक्षफल पर
सुरारीणा प्रकर्षेण खण्डयस्तत् वसुप्रद । ६९४

देवो वसुपु यद्वासो वसुभिर्दीव्यतीति वा
वसुदेवोऽस्य चापत्य वासुदेव प्रकीर्त्तित । ६९५

सर्वेष्वपि च भूतेपु वसतीति यथाप्यमो
सर्वभूतानि चास्मिश्च वसन्तीति वसुर्द्विधा । ६९६

अविशेषेण सर्वेषु विषयपु वसत्यत
वसु तादृक् मनो यस्य प्रोक्तो वसुमना हरि । ६९७

"ब्रह्मार्पण ब्रह्म हवि "भगवद्वचनादिति
यदर्पण हूयते यत् हविस्तत् हरिरेव स । ६९८

मद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः। ८८

---

टि:

६९२ वसु सुवर्णं रेतोऽस्येति वसुरेता "देव पूर्वमप सृष्ट्वा तासु वीर्यमवासृजत् तदण्डमभवद्धैम ब्रह्मण कारण पर" इति व्यासोक्ति —वसुरेतस नम

६९३ वसु धन प्रकर्षेण ददातीति साक्षाद्धनाध्यक्षोय इतरत् तु तत्प्रसादात् घनाध्यक्ष इति वसुप्रद —वसुप्रदाय नम

६९४ वसु प्रकृष्ट मोक्षाख्य फल भक्तेभ्य प्रददातीति द्वितीयो वसुप्रद 'विज्ञानमानन्द ब्रह्मरातिर्दातु परायणं तिष्ठमानस्य तद्विद" इति श्रुते सुरारीणा वसूनि प्रकर्षेण खण्डयन् वा वसुप्रद —वसुप्रदाय नम

६९५ वसुदेवस्यापत्य वासुदेव —वासुदेवाय नम ६९६ वसन्ति भूतानि तत्र तेष्वय अपि वसतीति वसु —वसवे नम ६९७ वसुमनसे नम

६९८ हविषे नम

श्लो० भा० :-

सज्ज्ञाता सतामेव गतिस्तैर्गम्यतेऽथवा
सतां गतिः समुत्कृष्टा बुद्धिरस्येति सद्गतिः । ६९९

सती च शोभना कृतिः जगद्रक्षणलक्षणा
कृतिरस्येति विख्यातो विष्णुरेव तु सत्कृतिः । ७००

एकमेवाद्वितीयश्च ब्रह्म सत्तापि च श्रुते
सजातीयविजातीय स्वगभेदैर्विवर्जित । ७०१

सन्नेव परमात्मा च चिद्भूतिश्च चिदात्मन
सच्चासौ भूतिरप्युक्त सद्भूति सच्चिदात्मक । ७०२

सतां तत्त्वविदामेव प्रकृष्टमयनं परं
इत्यस्मात् हरिरेवात्र सत्परायण उच्यते । ७०३

हनुमत्प्रमुखै शूरैः शूरसेना विराजिता
सा शूरसेना यस्यासौ शूरसेनो रघूत्तम । ७०४

यदूनां यदुवंश्यानां प्राधान्येतिशयेन च
सर्वप्रधान श्रेष्ठोऽसौ यदुश्रेष्ठ प्रकीर्तित । ७०५

सतां च विदुषामेव निवासश्चाश्रयो यत
सन्निवास सतां गतिश्च विष्णुरेव प्रकीर्तित । ७०६

---

टि :-

६९९ "अस्ति ब्रह्मेति चेत् वेद सन्तमेन ततो विदु" इति श्रुते ब्रह्मास्तीति ये विदुस्ते सन्त तैं प्राप्यत इति सत् गति सतो गतिर्बुद्धि समुत्कृष्टा अस्येति गति – सद्गतये नम

७०० सती कृति जगद्रक्षणलक्षणास्य यस्मात् तेन वा सत् सत्कृति – सत्कृतय नम

७०१ सत्तायै नम ७०२ सद्भूतये नम

७०३ सत्परायणाय नम ७०४ शूरसेनाय नम

७०५ यदुश्रेष्ठाय नम ७०६ सन्निवासाय नम

उद्वास्याथ च कालिय च हरिणा यच्छोभना यामुना
देवक्या वसुदेवमुख्ययदुभिर्गोगोपगोपीजनैः ।
हृष्टैर्वा परिवेष्टितोऽथ भगवान् यद्यामुनैः शोभनैः ।
सन्त्यस्येति सुयामुनोपि शुभदा पद्मासनाद्यासना ॥ ७०७

## भूतावासो वासुदेवः सर्वासुनिलयोऽनलः
## दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः । ८६

श्लो० भा० :-

भूतान्यत्राभिमुख्येन वसन्त्यस्मिन्निति स्मृत
भूतावासो हरिश्चेति स्मृत्या चापि प्रकीर्तित । ७

वासुश्च मायया यस्तु जगदाच्छादयत्यत
सोपि वासो च देवश्च वासुदेवो हरि स्मृत । ७

सर्व एवासव प्राणा निलीयन्त्येऽपि चाश्रये
यस्मिन् जीवात्मके सोपि सर्वासुनिलय स्मृत । [illegible]

अल पर्याप्तिरस्येति सर्वेषामपि सपदा
विद्यते नैव चेत्युक्तश्चानलो विष्णुरेव स । ७

अधर्मनिरतात्मा च दैत्यादीनामशेषत
हन्ति दर्पमतो चेति दर्पहा विष्णुरुच्यते । [illegible]

धर्मवर्त्मनि सस्थाना सुरादीना सदैव च
दर्पं हर्षं ददातीति दर्पद स प्रकीर्तित । ७[illegible]

---

टि०

७०७ यमुनासबन्धिनो यामुना येन काळियनिरासेन यामुना सुशोभना कृ[illegible]
स सुयामुन 'यम परिवेषणे' इति धातो परिवेषण परिवेष्टन शोभ[illegible]
यामुना परिवेष्टार परिजना नन्दादयो वासुदेवादयश्च गोपवेषध[illegible]
यामुना परिवेष्टारः पद्मासनादय सुशोभना अस्येति वा सुयामुना
सुयामुनाय नम

७०८ "वसन्ति त्वयि भूतानि भूतावासस्ततो भवान्"इति हरिवशे–भूतवासाय न[illegible]

७०९ जगदाच्छादयति माययेति वासु स एव देव इति वासुदेव इति भाष्ये
वासुदेवाय नम

७१० सर्वासुनिलयाय नम ७११ अनलाय नम

७१२ दर्पघ्ने नम ७१३ दर्पदाय नम

स्वात्मामृतरसास्वादात् नित्यप्रमुदितो यतः
दृप्तश्च प्रथितो विष्णुर्निरानन्दस्वरूपतः । ७१४

जन्मान्तरसहस्रेषु भावनायोगतो हृदि
दुःखेन धार्यते कैश्चित् यत्प्रमादात् स दुर्धरः । ७१५

रागाद्यैश्चान्तरैर्बाह्यैर्दैत्याद्यैश्च शत्रुभिः
पराजितो नैव येन कैश्चितश्चापराजितः । ७१६

## विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान्
## अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ९०

श्लो० भा०:

सर्वात्मकत्वात् विश्वं च मूर्तिरस्येति च स्वतः
विश्वव्यापी च विश्वात्मा विश्वमूर्तिरिहोच्यते । ७१७

महती मूर्तिरस्येति शेषपर्यङ्कशायिनः
अनिरुद्धात्मनश्चेति महामूर्तिः प्रकीर्तितः । ७१८

दीप्ता ज्ञानमयी मूर्तिर्गृहीता स्वेच्छयापि वा
दीप्ता च तैजसी चास्य दीप्तमूर्तिरितीरितः । ७१९

न विद्यते मूर्तिरस्य यथा कर्मनिबन्धना
तथा च प्रथितश्चासौ विष्णुश्चामूर्तिमानपि । ७२०

---

टि:-

७१४ दृप्ताय नमः

७१५ न शक्या धारणा यस्य प्रणिधानादिषु सर्वोपाधिविनिर्मुक्तत्वात् तथापि तत् प्रसादतः कैश्चित् दुःखेन धार्यते हृदये जन्मान्तरसहस्रेषु भावनायोगात् तस्मात् दुर्धरः इति भाष्ये–'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते" इति गीतायाम्–दुर्धराय नमः

७१६ अपराजिताय नमः

७१७ विश्वमूर्तये नमः ७१८ महामूर्तये नमः

७१९ दीप्ता ज्ञानमयी मूर्तिर्यस्येति स्वेच्छया गृहीता तैजसी मूर्तिर्दीप्तास्येति वा दीप्तमूर्तिः–दीप्तमूर्तये नमः

७२० अमूर्तिमते नमः

स्वेच्छया भजते मूर्तीर्बह्वीर्लोकोपकारिणी
अनेकमूर्तिरित्युक्त स्वप्रभावेष्वनेकधा । ७२१

अनेकमूर्तिमत्त्वेऽपि व्यज्यते नैव चेत्यत
अय कीदृश एव वाप्यव्यक्तश्चेति कीर्तित । ७२२

नानाविकल्पजाश्चास्य मूर्तय सविदाकृते
सन्त्यनेका शत चेति शतमूर्ति स विश्रुत । ७२३

यावन्मूर्तिश्च य प्रोक्तस्तावदानन एव स
शतमूर्तिस्ततश्चासौ प्रोक्तश्चापि शतानन । ७२४

## एकोनैकः सवः कः किं यत्तत्पदमनुत्तमं
## लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः। ६१

श्लो० भा०:-

सजातीयविजातीयस्वगतै परमार्थत
भेदैर्विवर्जितश्चैकोऽप्यद्वितीय प्रतीतित । ७२५

"इन्द्रो मायाभि"रित्यादि श्रुतिवाक्यानुसारत
मायया बहुरूपत्वात् नैकश्चेति हरि स्मृत । ७२६

सोमोऽभिषूयतेऽत्रेति सवश्चाध्वर एव स
तत्स्वरूपतया प्रोक्त सवो यज्ञात्मको हरि । ७२७

सुखवाचकशब्देन येन य स्तूयते स क
"क ब्रह्मे"ति श्रुतेश्चापि कश्चाकारान्त उच्यते । ७२८

---

टि:-

७२१ स्वप्रभावेषु स्वावतारेषु स्वेच्छया लोकाना उपकारिणीर्बह्वीर्मूर्तीर्भजत इति अनेकमूर्ति –अनेकमूर्तये नम

७२२ अव्यक्ताय नम ७२३ शतमूर्तये नम ७२४ शताननाय नम

७२५ एकस्मै नम ७२६ "इन्द्रो मायाभि पुरुरूप ईयत"–नैकस्मै नम

७२७ सोमो यत्राभिषूयते सोऽध्वर सव –सवाय नम

७२८ कश्चाकारान्त इति ■ सर्वनामशब्द सवा सुखार्थक–काय नम

पुरुषार्थस्वरूपत्वात् विचार्य ब्रह्म येष्यते
विमर्शगोचरत्वेन यद्वा कि शब्दवाच्यम्। ७२९

"यतो वै"इत्यादि च श्रुत्या यस्मादुत्पद्यते त्वदा
यस्मात्त्वेन च यत् ब्रह्म तस्मै यत् ब्रह्म चोच्यते। ७३०

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविध स्मृत
भगवद्वचनात्सैव तत्त्व ब्रह्मेति कीर्तितम्। ७३१

मुमुक्षुभि पदमेव गम्यते पदमुत्तमं
उत्कृष्ट नास्ति यस्मात्तु प्रोक्त पदमनुत्तमम्। ७३२

आधारभूतो लोकाना जनकश्च गुरु सुहृत्
लोकबन्धुस्तनामाय बन्धुत्वार्थदा स्वयम्। ७३३

नाथ्यते याच्यते लोकैर्दुष्टानुपतपत्यन
आशास्ते च यतोऽभीष्टं लोकनाथोऽयमितीश्वर। ७३४

मन्यते ज्ञायते येति मधुश्च यदुवंशज
राजा तस्य कुले जातो माधवश्चेति कीर्तित। ७३५

भक्तानामखिलानाञ्च वत्सल स्नेहवानिति
भक्तवत्सल इत्युक्तो भगवान् विष्णुरेव स। ७३६

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनांगदी
वीरहा विषमः शून्यो घृताशीरचलश्चलः। ९२

---

टि:-

७२९ कस्मै नम ७३० "यतो वा इमानि भूतानि जायन्ते"इति श्रुते--यस्मै नम

७३१ तनीतीति ब्रह्म तत्--तस्मै नम

७३२ पदमनुत्तममिति सविशेषणमेक नाम--पदाय अनुत्तमाय नम

७३३ आधारभूतेऽस्मिन् सकला लोका बध्यन्त इति लोकबन्धु लोकाना जनकत्वात् जनकोपमो बन्धुर्नास्तीति लोकबन्धु लोकाना बन्धुकृत्य हिताहितोपदेश श्रुति स्मृतिलक्षण कृतवानिति वा लोकबन्धु --लोकबन्धवे नम

७३४ लोकैर्नाथ्यते, लोकान् दुष्टान् उपतपति, शिष्टानाशास्ते, लोकहितार्थमीष्टे लोकाना नाथो लोकनाथ--लोकनाथाय नम

७३५ मधुकुले जातत्वात् माधव --माधवाय नम ७३६ भक्तवत्सल

श्लो० भा०:-

सुवर्णस्य च हेम्नोपि वर्णवत् वर्णमस्य यत्
सुवर्णवर्ण इत्युक्तो "रुक्मवर्ण' मिति श्रुते । ७३७

हेमवच्छोभन चाङ्ग हेमाङ्गोऽस्येति कीर्तित
" य एषोन्तरादित्ये हिरण्मय" इति श्रुते । ७३८

वराणि शोभनानीति दर्शनीयान्यपि स्वत
अगानि सकलान्यस्य वराङ्गश्चेति कीर्तित । ७३९

आह्लादनैश्चन्दनैश्च केयूरैश्चाङ्गदैरिति
सम्यक् विभूषितश्चेति प्रोक्तोऽसौ चन्दनाङ्गदी । ७४०

धर्मसस्थापनार्थाय वीरान् सुरारिपूनपि
हिरण्यादीश्च हन्तीति वीरहा हरिरुच्यते । ७४१

विगतश्च समोऽस्येति सर्वेभ्योपि विलक्षण
"त्वत्समो नास्ति" गीतोक्त्या विषमो विष्णुरुच्यते । ७४२

जातिमात्रस्वरूपादिविशेषाशेषशून्यता
वस्तुतश्चास्य चेत्युक्त शून्यवत् शून्य एव स । ७४३

अवाप्तसर्वकामत्वात् घृता विगळितास्तथा
आशिष प्रार्थनाश्चास्य घृताशीश्चेति कीर्तित । ७४४

न स्वरूपात् न सामर्थ्यात् नैव ज्ञानादिकात् गुणात्
चलन विद्यतेऽस्येति प्रोक्तश्चाचल इत्यमो । ७४५

चलतीति चल प्रोक्तो वायुरूपेण य स्वय
स्वेच्छया सर्वरूपत्वात् सर्वगश्च सदागति । ७४६

---

टि:-

७३७ "यदापश्य पश्यते रुक्मवर्ण" इति श्रुते – सुवर्णवर्णाय नम

| | | |
|---|---|---|
| ७३८ हेमाङ्गाय नम | ७३९ वराङ्गाय नम | ७४० चन्दनाङ्गदिने नम |
| ७४१ वीरघ्ने नम | ७४२ विषमाय नम | ७४३ शून्याय नम |
| ७४४ घृताशिषे नम | ७४५ अचलाय नम | ७४६ चलाय नम |

अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक्
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ।　　६३

श्लो० भा०:-

सत्त्वेऽपि मानेऽप्यभिमानो न विद्यते
अमानी तु स तु प्रोक्तो यस्य चानात्मवस्तुषु ।　　७४७

अनात्मवस्तुष्वभिमानमेव वा
विवेकिनां यो द्यति खण्डयत्यपि ।
ददाति तत्त्वान्यनृतां स्वमायया
सतां च सत्कारमपीह मानदः ॥　　७४८

सर्वेश्वरत्वात् सर्वैश्च ब्रह्माद्यैरपि सर्वदा
माननीयोऽथ पूज्योऽसौ मान्यश्चेति प्रकीर्तितः ।　　७४९

चतुर्दशानां लोकानां स्वामी चेश्वर इत्यतः
लोकस्वामीति स प्रोक्तो यस्तु सर्वेश्वरः स्वतः ।　　७५०

ऊर्ध्वाधोमध्यगांश्चेति त्रीन् लोकान् धरतीत्यतः
त्रिलोकधृक् स भगवान् विष्णुरेव प्रकीर्तितः ।　　७५१

भगवद्ध्याने मेधत्यस्याः सर्वं मेधापि शोभना
प्रज्ञा स्वाभाविकी तस्य सुमेधाश्च प्रकीर्तितः ।　　७५२

मेध्यते हिंस्यते चात्र पशुर्मेधोऽथ मेधजः
जायते यज्ञरूपेण मेधे वह्न्यात्मनेति वा　　७५३

---

टि:-

७४७ अनात्मवस्तुषु मानोऽभिमानो नास्त्येत्यमानी—अमानिने नमः

७४८ विवेकिनां तत्त्वविदां मानं द्यति खण्डयति अन्येषां स्वमायया मानं ददाति चेति मानदः भक्तानां मानं सत्कारं ददातीति वा मानदः—मानदाय नमः

७४९ मान्याय नमः　　७५० लोकस्वामिने नमः

७५१ त्रीन् लोकान् धारयतीति त्रिलोकधृक् इति माप्ये धृञः क्विपि तुक् इति त्रिलोकधृत् वा—त्रिलोकधृषे नमः अथवा—त्रिलोकधृते नमः

७५२ समासान्तोऽसिच् इति—सुमेधसे नमः　　७५३ मेधजाय नमः

सर्वसात्प्रपूर्णत्वात् कृतार्थश्चापि सर्वथा
धन्य स प्रथितो विष्णुर्नान्यो धन्योस्ति तत्सम । ७५४

सत्याप्यवितथा मेधा प्रज्ञा चास्येति च स्वत
सत्यमेधा हरिश्चेति सर्वथा स प्रकीर्तित । ७५५

धरायाश्च धरो यस्तु धारयस्तु धरामिमि
अशेषदोषे शेषाद्यैरशेषा ता धराधर । ७५६

## तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः
## प्रग्रहो निग्रहो व्यग्रो नैकशृंगो गदाग्रजः। ६४

श्लो० भा० :-

तेजसा भाति चादाय तेजांस्यपि तु वर्षति
तेजोवृषस्तु भगवान् भान्वात्मा विष्णुरेव स । ७५७

स्वस्य सर्वाङ्गगामेव द्युतिं कान्तिं विशेषत
धरतीति सदैवेति प्रोक्तो द्युतिधरो हरि । ७५८

बिभर्तीति च शस्त्राणि सर्वे शस्त्रभृतस्तु ये
श्रेष्ठस्तेषा च सर्वेषा सर्वशस्त्रभृतावर । ७५९

भक्तैरुपहृत सर्वं प्रगृह्णाति प्रसादनात्
प्रग्रहश्चेति बध्नाति दुर्दान्तेन्द्रियवाजिन । ७६०

इन्द्रियाण्यखिलान्यस्य स्ववशानीति सर्वथा
निगृह्णातीत्यतश्चासौ निग्रहश्चेति कीर्तित । ७६१

---

टि :-

७५४ कृतार्थो धन्य –धन्याय नम

७५५ सत्यमेधसे नम देवतापक्षे सत्यमेधायै नम    ७५६ धराधराय नम

७५७ तेजोवृषाय नम    ७५८ द्युतिधराय नम    ७५९ सर्वशस्त्रभृतावराय नम

७६० भक्तैरुपहृत पत्रपुष्पादिक प्रगृह्णातीति प्रग्रह –धावतो विषयारण्ये दुर्दान्तेन्द्रियवाजिन तत्प्रसादेन रश्मिनेव बध्नातीति वा प्रग्रहवत् प्रग्रह इति भाष्ये –प्रग्रहाय नम

७६१ निग्रहाय नम

विगत चाग्रमन्तोऽस्य विनाशो व्यग्र उच्यते
भक्ताभीष्टप्रदाने वा व्यापृतो व्यग्र एव स । ७६२

नैकान्यस्य तु शृङ्गाणि "चत्वारी"त्यपि मन्त्रत
नैकशृङ्गोपि यज्ञात्मा विष्णुरेव प्रकीर्तित । ७६३

निगदेन च मन्त्रेणाप्यग्रे जातो गदाग्रज
गदनाम्नो यादवस्याप्यग्रजो वा गदाग्रज । ७६४

चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ६५

श्लो० भा०:-

प्रोक्तो यस्तु विराट्स्वरूप इति वाप्यन्यस्तु सूत्रात्मको
यश्चाव्याकृतरूप एव च परस्तुर्यस्तुरीयात्मक ।
वर्णाःसितरक्तपीततनव कृष्णापि चान्यया तथा
मत्त्यस्येति च मूर्तयोपि च चतुर्मूर्तिश्चतस्रोपि वा ॥ ७६५

चत्वारो बाहवोऽस्येति चतुर्बाहु प्रकीर्तित
वासुदेवे तु नामैतत् रूढमित्याह भाष्यकृत् । ७६६

चतुर्व्यूहोऽस्य च व्यूहाश्चत्वारो बह्वृचोदिता
शरीरच्छन्दवेदाख्या महापुरुष इत्यपि । ७६७

---

टि:-

७६२ व्यग्राय नम

७६३ चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य, त्रिधा बद्धो वृषभो रोरवीति, महादेवो मर्त्यां आविवेश 'इति मन्त्रवर्णात् —नैकशृङ्गाय नम

७६४ गदाग्रजाय नम

७६५ चतस्रो मूर्तयो विराट्सूत्राव्याकृततुरीयात्मानोस्येति चतुर्मूर्ति सितारक्ता, पीता, कृष्णा चेति चतस्रो मूर्तयोऽस्येति वा—चतुर्मूर्तये नम

७६६ चतुर्बाहवे नम

७६७ शरीरपुरुष छन्दपुरुषो, वेदपुरुषो, महापुरुष इति बह्वृचोपनिषदुक्ताश्चत्वार पुरुषा व्यूहा अस्येति—चतुर्व्यूहाय नम

चतुर्णामपि वर्णानामाश्रमाणां तथैव च
गतिश्चाश्रय एवासौ चतुर्गतिरिहोच्यते। ७६८

रागद्वेषादिराहित्यात् समर्थश्चतुरस्तथा
आत्माऽस्य चतुरात्मा वा मनोबुद्ध्यादिभिस्तथा। ७६९

धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टय
भवस्युत्पद्यते यस्मात् चतुर्भाव स कीर्तित। ७७०

यथावत् वेत्ति वेदाना चतुर्णामर्थमित्यत
चतुर्वेदविदित्युक्तो भगवान् हरिरेव स। ७७१

"पादोऽस्य विश्वा भूतानि" श्रुत्या चेत्यमिमन्त्रणात्
एष पादोस्य चेत्युक्तश्चैकपात् जगतोखिलम्। ७७२

समावर्त्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा। ८६

श्लो० भा०:-

ससारास्य महच्चक्र सम्यगावर्तयन् सदा
समावर्त समाख्यातो विष्णुरेव च सर्वथा। ७७३

सर्वंवृत्त्यनिवृत्तात्मा सर्वतश्चानिवर्तित
निवृत्तात्मा निवृत्त यत् विषयेभ्यो मनोस्य वा। ७७४

---

टि:-

७६८ चतुर्गतये नम

७६९ रागद्वेषादिराहित्यात् समर्थ मन अस्येति वा-मनोबुद्ध्यहकारचित्ताख्यान्त करणचतुष्टयात्मकत्वात् चतुरात्मा-चतुरात्मने नम

७७० चतुर्भावाय नम ७७१ चतुर्वेदविदे नम

७७२ 'विष्टभ्याहमिद कृत्स्न एकाशेन स्थितो जगत्" इति भगवद्वचनात् -एकपदे नम

७७३ समावर्त्ताय नम ७७४ अनिवृत्तात्मने नम अथवा निवृत्तात्मने नम

सुरासुरनरैश्चापि जेतु नैव तु शक्यते
तत ॥ दुर्जय प्रोक्त सर्वशक्तिमता वर । ७७५

नातिक्रामन्ति यस्याज्ञामग्निसूर्यादयोखिला
सर्वथा भयहेतुत्वात् प्रोक्तोऽसौ दुरतिक्रम । ७७६

भक्त्या दुर्लभया लभ्यो दुर्लभश्चेति कीर्तित
भगवद्वचनाच्चैव "भक्त्या लभ्यस्त्वनन्यया" । ७७७

गमेर्ज्ञानार्थतश्चात्र गम्यते ज्ञायते तु य
दु खेन दुर्गमश्चेति भगवान् विष्णुरेव स । ७७८

अन्तरायप्रतिहतैर्मु द्य चाप्यन्तरान्तरा
दु खादवाप्यते चेति दुर्गोऽसौ विष्णुरुच्यते । ७७९

समाधिसमये चित्ते दु खेनावास्यते च य
योगिभिश्चापि सिद्धैश्च दुरावासस्ततोहि स । ७८०

दुर्मार्गगामिनश्चैव सुरारींश्च दुरारिण
दानवादींश्च हन्तीति प्रोक्तश्चासौ दुरारिहा । ७८१

शुभांगो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः। ९७

श्लो० भा०:-

शुभानि शोभनान्यस्य दर्शनीयानि सर्वथा
अगानि सकलानीति शुभागोऽसौ प्रकीर्तित । ७८२

---

टि:–

७७५ दुर्जयाय नम ७७६ दुरतिक्रमाय नम ७७७ दुर्लभाय नम
७७८ दुर्गमाय नम ७७९ दुर्गाय नम ७८० दुरावासाय नम
७८१ दुरारिघ्ने नम ७८२ शुभागाय नम

लोकाना सारभूत सुमगतमधुवत् यस्तु गृह्णात्यशेष
सारङ्गात्मा यथासौ मधुकरसदृशो लोकसारग उक्त ।
लोका वेदाश्च तेषा प्रणवमिति पर सारमेवेति तेन
गम्योऽसौ वा प्रपद्य सुविदित इति वा लोकसारेण चेति ॥ ७८३

तनुते चेति तन्तुश्च प्रपञ्चश्चार्थतो यथा
सुतन्तु शोभनश्चास्य प्रपञ्चश्चातिविस्तृत । ७८४

तन्तु चेति प्रपञ्च त वर्धयन् पोषयस्तथा
छिन्दन्नपि च तञ्चैव तन्तुवर्धन उच्यते । ७८५

इन्द्रस्येव च कर्मास्य जगत पालनादिष
ऐश्वर्यकर्मवानप इन्द्रकर्मा प्रकीर्तित । ७८६

महान्ति विषयादीनि भूतान्यस्य भवन्ति यत्
कर्माणीति च कार्याणि महाकर्मा हरि स्मृत । ७८७

कृतकर्मा न कर्तव्य किञ्चिद्वा कर्म चास्य यत्
कृतार्थ कृतवानेप कर्म धर्मात्मक च वा । ७८८

आगम्यते ज्ञायते वा येन वेदस्तदागम
आगमश्च कृतोऽनेन प्रोक्तश्चेति कृतागम । ७८९

उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः
अर्को वाजसनः शृंगी जयन्तः सर्वविज्जयी । ८८

---

टिः-

७८३ लोकाना सार सारगवत् भृगवत् गृह्णातीति लोकसारग 'प्रजापतिर्लोका-नभ्यपतत्" इति श्रुते । लोकसार प्रणव, तेन प्रतिपत्तव्यइति वा इति भाष्ये—लोकसारगाय नम

७८४ शोभनस्तन्तुर्विस्तीर्ण प्रपञ्चोऽस्येति, सुतन्तु

७८५ सुतन्तवे नम (तन्तुवर्धयति छेदयतीति वा तन्तुवर्धन—तन्तुवर्धनाय नम)

७८६ इन्द्रकर्मणे नम ७८७ महाकर्मणे नम

७८८ कृतकर्मणे नम ७८९ कृतागमाय नम

स्तो० भा० :–

उत्कृष्टश्च भवो जन्म स्वेच्छयास्येति चोद्भव
भवोऽस्य सर्वहेतुत्वात् उद्गतोऽपगतोऽपि वा । ७९०

विश्वातिशायि सौभाग्यशालित्वात् सुन्दरश्च य
शोभमानो दर्शनीय सर्वथा हरिरुच्यते । ७९१

सुष्ठु सम्यगुनत्तीति दययार्द्रीभवत्यत
उन्दी च क्लेदने चेति सुन्दोऽसौ करुणाकर । ७९२

रत्नवत् शोभना चास्य सुन्दरा नाभिरित्यत
रत्ननाभो हरि प्रोक्त सर्वलक्षणलक्षित । ७९३

शोभने दर्शनीयेऽस्य लोचने चेति वा तथा
शोभन ज्ञानमस्येति प्रोक्तश्चासौ सुलोचन । ७९४

ब्रह्मादिभि पूज्यतमै सर्वैश्चाप्यर्च्यते तथा
अर्च्यते स्तूयते वासौ प्रोक्तश्चार्को हरिश्च स । ७९५

वाज वाजयनीरश्च शरीर गमयत्यपि
सनोति च ददातीति वाज वाजसन स्मृत । ७९६

प्रळयाम्भसि चास्यैव प्रभवे मत्स्यरूपिण
महच्च शृङ्गमस्तीति शृङ्गी विष्णुरिहोच्यते । ७९७

जयत्यतिशयेनासौ सर्वांश्चारिकुलानिति
सुराणा जयहेतुर्वा जयन्तश्चेति कीर्तित । ७९८

सर्वं यथावत् स तु वेत्ति सर्ववित्
जेजीयतेऽरीनखिलानथान्तरान् ।
बाह्यान् हिरण्याद्यसुरादिकान् जयी
द्वावप्यसौ चेति स सर्वविज्जयी ॥ ७९९

---

टि :-

७९० उद्भवाय नम   ७९१ सुन्दराय नम
७९२ उन्दी क्लेदने इति धातो सुष्ठु उनत्तीति सुन्द –सुन्दाय नम
७९३ रत्ननाभाय नम   ७९४ सुलोचनाय नम   ७९५ अर्काय नम
७९६ वाजतीति शरीर निर्वाण गमयतीति अन्न–वाजसनाय नम
७९७ शृङ्गिणे नम   ७९८ जयन्ताय नम
७९९ सर्वविच्चासौ जयी चेति सर्वविज्जयी–सर्वविज्जयिने नम

सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः
महाह्रदो महागर्त्तो महाभूतो महानिधिः। ९६

श्लो० भा०:-

सुवर्णबिन्दुश्च सुवर्णशोभना
यस्यैव सर्वावयवाश्च बिन्दव ।
सुवर्णं ओमित्यतिशोभनाक्षर
स बिन्दुरेष प्रणवात्मको हरि ॥ ८००

रागद्वेषादिभिश्चैव शब्दादिविषयैरपि
क्षोभ्यते नैव चाक्षोभ्यस्त्रिदशारिभिरप्यसौ । ८०१

वागीश्वराणां सर्वेषा ब्रह्मादीनामपीश्वर
प्रोक्तस्तु भगवान् विष्णु सर्ववागीश्वरेश्वर ॥ ८०२

अवगाह्य सदानन्द विश्रम्य सुखमासते
महाह्रदे चेव हप्ता प्रोक्तश्चासौ महाह्रद । ८०३

महान् गर्त्तोस्य चेत्युक्तो महागर्त्तो हरिस्तत
गर्त्तोमायारथश्चेति महामायो महारथ । ८०४

कालत्रयापरिच्छिन्नस्वरूपो भगवान् हरि
महांश्चासौ च भूतश्च महाभूत इति स्मृत । ८०५

प्रळयेऽस्मिन् निलीयन्ते सर्वभूतानि यन्निधि
महांश्चासौ निधिश्चेति महानिधिरितीरित । ८०६

---

टि :-

८०० सुवर्णबिन्दवे नम. ८०१ अक्षोभ्याय नम

८०२ सर्ववागीश्वरेश्वराय नम ८०३ महाह्रदाय नम

८०४ गर्तपदस्य माया दुरत्ययेति महागर्त गर्तशब्दो रथपर्याय इति महागर्त्त महामायश्च महारथश्च महागर्त्त—महागर्त्ताय नम।

८०५ महाभूताय नम

८०६ निधीयन्ते अस्मिन् इति निधि महांश्चासौ निधिश्च महानिधि सर्वभूतान्य-स्मिन् निधीयन्ते महानिधि—महानिधये नम

कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः
अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः॥ १००

श्लो० भा० -

कु चापि धरणी चात्र भारावतरणादपि
मोदयत्येष चेत्युक्त कुमुदो विष्णुरेव स । ८०७

कुन्दप्रसूनसदृशान्यमलानि राति
य कर्मणामपि फलानि ददाति लाति ।
आदत्त इत्युपहृत च फलादि भक्तै
कु दारयन् क्षितिमपु स तु कुन्दर इमाम् ॥ ८०८

कु काश्यपाय समदादिति भार्गव इमा
कु द्वीपवर्षविभिदाप्यचखण्डतासौ ।
कु भूपवशनिवह बहुशोऽच्छिनद्वा
कुन्द स कुन्दनिभभासुरनिर्मलाभ ॥ ८०९

तापत्रय च शमयत्यथ चाध्यात्मिकादिक
अभिवर्षति सर्वांश्च कामान् पर्जन्य एव स । ८१०

स्मृतिमात्रेण भक्ताना पापानि सकलान्यपि
अपनीय पुनातीति पावनश्चेति कीर्तित । ७११

प्रोक्त प्रेरक एव चेलति च यो नामाविलश्चानिल
स्वेच्छामात्रमसौ करोति सकल नान्योस्य वा प्रेरक ।
अज्ञो यत् स्वपितीलतीत्यपि न चेत् नित्यप्रबुद्धोऽनिल
भक्तेभ्य सुलभोनिलो न गहनो नामो निलश्चार्थत ॥ ८१२

---

टि:

८०७ कुमुदाय नम ८०८ कुन्दराय नम

८०९ कु भूमि जम्बूद्वीपादि सप्तद्वीपैश्च भारतादिवर्षैश्च विभाजयन् कुन्द –कुन्दाय नम

८१० पर्जन्याय नम ८११ पावनाय नम

८१२ इलति प्रेरण करोतीति इल नद्रहितत्वादनिल इलति स्वपितीत्यज्ञ इल तद्विपरीतो नित्यबुद्धस्वरूपत्वात् वा अनिल अथवा निल्तर्गहनार्थात् क प्रत्ययान्तात् रूप अगहन अनिल भक्तेभ्य सुलभ इति भाष्ये–अनिलाय नम

स्वात्मामृत वाप्यश्नाति दुग्धाब्धि मथितामृत
अमृताशोऽमृतास्याशा फले वाञ्छाप्यनश्वरा । ८१३

मृत च मरण नास्तीत्यमृत नाशवर्जित
अमृत वपुरस्येति प्रोक्तोऽमृतवपुश्च स । ८१४

सर्वं च वेदशास्त्राद्यमशेषविषय तु य
जानातीति च सर्वज्ञ सर्वथा विष्णुरेव स । ८१५

सर्वतोपि मुखान्यस्येत्युक्तोऽसौ सर्वतोमुख
भगवद्वचनाच्चैव "सर्वतोक्षिशिरोमुखम्" । ८१६

## सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः
## न्यग्रोधोदुंबरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः । १०१

श्लो० भा० :-

पत्रपुष्पफलाद्यैश्च भक्तिमात्रसमर्पितै
सुखेन लभ्यते यस्मो प्राप्यते सुलभस्तथा । ८१७

शोभन व्रतयत्येष भक्तैरुपहृत सदा
भुङ्क्ते चोपहृतादन्यं सुव्रत स निवर्तते । ८१८

स हि सवित्स्वरूपत्वात् स्वत एव च सिध्यति
नान्याधीनस्तु सिद्धोऽसौ नैव केनापि साध्यते । ८१९

सुराणा शत्रवश्चैव शत्रवोऽस्यापि चासुरा
तांश्च दुष्टानशेषेण जयतीति च शत्रुजित् । ८२०

---

टि.-

८१३ स्वात्मामृतमश्नातीति अमृताश मथितममृत सुरान् पाययित्वा स्वय चाश्नातीति वा अमृताश, अमृता अनश्वरफलत्वादाशा वाञ्छा अस्येति वा —अमृताशाय नम

८१४ अमृतवपुषे नम  ८१५ सर्वज्ञाय नम  ८१६ सर्वतोमुखाय नम

८१७ पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै कथ न क्रियते प्रयत्न इति स्मृतेश्च—सुलभाय नम

८१८ सुव्रताय नम

८१९ सिद्धाय नम  ८२० शत्रुजिते नम

शत्रुजिच्चेत्यसौ ताश्च सुरशत्रूनशेषत
सर्वथा तापयत्यस्मात् कीर्तित शत्रुतापन । ८२१

सर्वोपरिस्थो न्यग्रोधो न्यगर्वाङ् रोहतीति वा
न्यक्कृत्याखिलभूतानि रुणद्धि निजमायया। ८२२

अवरादुद्गतश्चेति वारणत्वादुदुवर
श्रुत्यानाद्येन विश्व च पोषयन् वा तदात्मना। ८२३

श्वो न स्यातेति चाश्वत्थो भगवद्वचनादपि
"ऊर्ध्वमूलमध शाखमश्वत्थ प्राहुरव्ययम्"। ८२४

चाणूरसज्ञश्चान्ध्रो,यश्चान्ध्रे जनपदे भव
स निषूदितवाश्चेति चाणूरान्ध्रनिषूदन । ८२५

**सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः**
**अमूर्तिरनघोऽचिन्त्यो भयकृत् भयनाशनः।** १०२

श्लो० भा० :-

सहस्रार्चिरनन्तानि यस्यार्चीष्यपि स स्मृत
"दिवि सूर्यसहस्रस्य भवे'दित्यादि च स्मृते । ८२६

काली कराली चेत्यादि जिह्वाश्चाग्ने श्रुतीरिता
सप्तास्य जिह्वा सन्तीति सप्तजिह्वो हरि स्मृत । ८२७

सप्तैधा सप्तचैधासि समिधश्चाग्निदीप्तय
अस्य सन्तीति स प्रोक्त "सप्त ते अग्न' ति च श्रुते । ८२८

---

टि :-

८२१ शत्रुतापनाय नम

८२२ न्यग्रोधाय नम    ८२३ उदुवराय नम    ८२४ अश्वत्थाय नम

८२५ चाणूरान्ध्रनिषूदनाय नम

८२६ सहस्रार्चिषे नम

८२७ काली कराली च मनोजवा च सुलोहिता चापि सुधूम्रवर्णा स्फुलिङ्गिनीविश्व रुची च देवी लेलायमाना इति सप्तजिह्वा" इति श्रुते –सप्तजिह्वाय नम

८२८ सप्तैधसे नम (सप्त ते अग्ने सामिध सप्तजिह्वा" इति श्रुते)

सप्ताश्वावाहनान्यस्य सप्तनामैक एव वा
वाहनोऽश्वोपि च श्रुत्या सप्तवाहन उच्यते । ८२९

अमूर्तिर्विद्यते यस्य न मूर्तिर्धारणक्षम
चराचरजगद्रूप देहसस्थानतोपि वा । ८३०

न हन्तीत्यघ यन्य यद्दु स पापमेव वा
तदघ विद्यते नास्येत्यनघ स प्रकीर्तित । ८३१

प्रपञ्चवैलक्षण्येनाप्यशक्यस्तत्त्वदर्शने
प्रमाणैरखिलैश्चासावचिन्त्यश्चेत्यगोचर । ८३२

असन्मार्गगतानाञ्च भय चैव करोत्यत
भक्ताना तत् कृणोतीति हिनस्ति भयकृच्च स । ८३३

स्वस्वधर्मचराणाञ्च सर्वेषामपि सर्वथा
भय नाशयतीत्युक्तो भगवान् भयनाशन । ८३४

**अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान्**
**अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः । १०३**

श्लो० भा० :-

"एषोणुरात्मा"चेत्यादि श्रुतिमन्त्रानुसारत
सौक्ष्म्यातिशयशालित्वादणुर्विष्णु प्रकीर्तित । ८३५

बृहत्वात् बृहणत्वाच्च ब्रह्म तत् बृहदुच्यते
"अणोरणीयान् महतो महीयान्" इति च श्रुते । ८३६

द्रव्यत्वप्रतिषेधेपि कृशश्चेत्युपपद्यते
सर्वात्मत्वात् कृशश्चेति कृशावस्तुस्वरूपत । ८३७

---

टि:-

८२९ "एको अश्वो वहति सप्तनामा" इति श्रुतेश्च—सप्तवाहनाय नम

८३० अमूर्तये नम ८३१ अनघाय नम ८३२ अचिन्त्याय नम

८३३ भयकृते नम ८३४ भयनाशनाय नम

८३५ अणवे नम ८३६ बृहते नम ८३७ कृशाय नम

कृशावत् स्थूलशब्दोपि भगवत्युपचर्यते
स्थूलवस्तुस्वरूपत्वात् स्थूलोपि हरिरुच्यते । ८३८

सृष्टिस्थितिलयार्थश्च रज सत्वतमास्यपि
गुणास्त्रीश्च विभर्तीति गुणभृत् स त्रिमूर्त्तिमान् । ८३९

वस्तुतश्च गुणाभावात् निर्गुणो हरिरुच्यते
"केवलो निर्गुण"श्चेति श्रुतिमन्त्रानुसारत । ८४०

शब्दादिगुणराहित्यात् सर्वव्यापितयापि च
वक्तु न शक्य केनापि प्रोक्तश्चासो महानिति । ८४१

भूम्यादिधारकाणाञ्च धारकत्वाश्च केनचित्
ध्रियते चेति स प्रोक्तो भगवानधृतो हरि । ८४२

नान्येन ध्रियते चेति धृतश्च स्वेन चात्मना
स्वधृत प्रथितश्चासो स्वे महिम्नि प्रतिष्ठित । ८४३

पद्मोदरदलाताश्च शोभन चास्यमस्य यत्
वेदनिर्गमनस्थान चेति वा स्वास्य उच्यते । ८४४

अस्य वश प्रपचेपि प्राणे वेत्यादिमो यत
पाश्चात्यो नैव चास्येति प्रागवशश्चेति कीर्तित । ८४५

प्रपचमितिवश स्व वर्धयन् छेदयन्नपि
पोपयश्च यथाकाल सहरन् वशवर्धन । ८४६

भारभृद् कथितो योगी योगीशः सर्वकामदः
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः। १०४

---

टि-

| | | |
|---|---|---|
| ८३८ स्थूलाय नम | ८३९ गुणभृते नम | ८४० निर्गुणाय नम |
| ८४१ महते नम | ८४२ अधृताय नम | ८४३ स्वधृताय नम |
| ८४४ स्वास्याय नम | ८४५ प्रागवशाय नम | ८४६ वशवर्धनाय नम |

श्लो० भा० :-

अनन्तादि स्वरूपेण भुवो भार बिभर्ति य
भारभृत् चेति भगवान् विष्णुरेव प्रकीर्तित । ८४७

आदौ मध्ये तथान्ते निगमवचनत सर्वतो गीयते य
वेदैर्वेदागशास्त्रैरपि च निगदित सेतिहासै पुराणै ।
पार चैवाध्वनोसौ परमपदमतश्चेन्द्रियेभ्य परोर्थ
सर्वैरेव प्रपद्य कथित इति पर चेति विष्णु समस्तम् ॥ ८४८

गम्यते येन योगे यत् ज्ञान योगी तदन्वित
समाधत्ते सर्वदा य स्वात्मान स्वात्मनीति वा । ८४९

अन्तरायैर्निहन्यन्ते प्रमाद्यन्त्यन्ययोगिन
तद्राहित्यादय तेषामीशो योगीश उच्यते । ८५०

भक्तानामपि सर्वेषा सर्वान् कामान् यथेप्सित
ददाति सतत चेति प्रोक्तोसौ सर्वकामद । ८५१

संसारदुर्गमारण्ये भ्रमतामाश्रमो यथा
विश्रमस्थानमेवासौ सर्वेषामपि चाश्रम । ८५२

सन्तापयति सर्वांश्च श्रमयत्यविवेकिन
श्रमणश्चेति स प्रोक्तो दुष्टशिक्षणतत्पर । ८५३

प्रळये तु प्रजा सर्वा क्षामा क्षीणाश्च य स्वत
करोतीति क्षाम एव प्रोक्त सहारकारणात् । ८५४

---

टि :-

८४७ भारभृते नम

८४८ वेदादिभिरयमेव परत्वेन कथित सर्ववेदै कथित इति वा कथित "सर्वे वेदा यत् पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्य" इति श्रुतिस्मृत्यादिवचनेभ्य कि तदध्वनो विष्णोर्व्यापनशीलस्य परम पद गन्तव्यमित्याकाक्षाया इन्द्रियादिभ्य सर्वेभ्य परत्वेन प्रतिपाद्यते इन्द्रियेभ्य पराह्यर्था इत्यारभ्य" पुरुषान्न पर किञ्चित् सा काष्ठा सा परा गति इत्यनेन य कथित स कथित इति भाष्ये—कथिताय नम

८४९ योगिने नम ८५० योगीशाय नम

८५१ सर्वकामदाय नम ८५२ आश्रमाय नम ८५३ श्रमणाय नम

८५४ क्षामा क्षीणा सर्वा प्रजा करोतीति क्षाम —तत् करोति तदाचष्टे इति णिचि पचाद्यचि कृते गपस क्षाम इति—क्षामाय नम

शोभनान्यस्य पर्णानि सहार तरुरूपिण
छन्दासीति सुपर्णोय भगवद्वचनात् स्मृत । ८५५

वायुर्वहति यद्धीत्या भूतानीति च कीर्तित
'भीषास्माद्वात' इत्यादि श्रुत्याद्यमो वायुवाहन । ८५६

धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः
अपराजितः सर्वसहो नियन्ता नियमोऽयमः। १०५

श्लो० भा० :-

धारयामास य श्रीमान् विख्यात च महद्धनु
सोपि दाशरथि प्रोक्तो राघवस्तु धनुर्धर । ८५७

रामो दाशरथि श्रीमान् धनुर्वेदमशेषत
वेत्तीति स धनुर्वेद प्रोच्यते हरिरेव स । ८५८

उत्पथाना च दमन "दण्डो दमयता"मिति
भगवद्वचनाच्चैव दण्डश्चेति प्रकीर्तित । ८५९

वैवस्वतनरेन्द्रादिस्वरूपेण प्रजास्तु य
यथार्ह दमयत्यस्मात् प्रोक्तो दमयितापसौ। ८६०

दमश्च दण्डकार्य च फल तच्च स एव यत्
दमश्च विष्णुरेवोक्त सर्वकार्यस्वरूपत । ८६१

शत्रुभिश्चासुराद्यैश्च सर्वैर्नैव पराजित
सर्वथा विजित सोयमपराजित उच्यते। ८६२

समर्थश्च सहश्चेति सर्वेष्वपि च कर्मसु
सहस्तु सर्वशत्रूणा सोढा सर्वसह स्मृत । ८६३

---

ठि :-

८५५ छन्दासि यस्य पर्णानीति गीता — सुपर्णाय नम
८५६ वायुवाहनाय नम    ८५७ धनुर्धराय नम
८५८ धनुर्वेदाय नम    ८५९ दण्डाय नम    ८६० दमयित्रे नम
८६१ दमाय नम    ८६२ अपराजिताय नम    ८६३ सर्वसहाय नम

स्वस्वकृत्येषु सर्वांश्च व्यवस्थापयतीत्यत
यथोचित स भगवान् नियन्ता चेति कीर्तित । ८६४

नियमो नियतिर्नास्य नियन्ता नान्य इत्यत
प्रोक्तश्चानियमो यद्वा योगाङ्गान्नियमोपि वा । ८६५

यच्छतीति यमो मृत्यु नास्त्यस्येत्ययम स्मृत
यद्वा यमश्च योगाङ्गस्तद्गम्यत्वात् यमो हरि । ८६६

सत्त्ववात् सात्त्विकः सत्यः सत्यधर्मपरायणः
अभिप्रायः प्रियार्होऽर्हः प्रियकृत् प्रीतिवर्धनः । १०६

श्लो० भा०:-

शौर्यवीर्यादिक सर्वं सत्त्व च सतत स्वत
विद्यते चास्य चेत्युक्त सत्त्ववान् हरिरेव स । ८६७

सतो भावस्तु सत्त्व यत् गुण प्राकृतिक स्वत
प्राधान्येन च तस्मिश्च तिष्ठतीति स सात्त्विक । ८६८

सत्सु साधुस्तु सत्योसौ वस्तुत पारमार्थिक
जगत् सर्वमसच्चेति सत्यश्चैवैक एव स । ८६९

यथार्थकथने सत्ये चोदनालक्षणात्मके
धर्मे च नियतासक्त सत्यधर्मपरायण । ८७०

प्राप्यतेऽभिप्रेयतेऽभायभिप्राय सुमेच्छुभि
आभिमुख्येन वा प्रीति लीयतेऽस्मिन् लये जगत् । ८७१

---

टि :-

८६४ नियन्त्रे नम

८६५ न नियमो नियतिरन्यस्य विद्यते इति अनियम सर्वनियन्तुर्नियन्त्रन्तरभावा द्वा योगाङ्गत्वात् नियमो वा—अनियमाय नम अथवा नियमाय नम

८६६ यमनियमो योगाङ्गे तद्गम्यत्वात्। स एव यम—अयमाय नम अथवा यमाय नम

८६७ सत्त्ववते नम ८६८ सात्त्विकाय नम ८६९ सत्याय नम

८७० सत्यधर्मपरायणाय नम ८७१ अभिप्रायाय नम

यद्यदिष्टतम लोके देय तत्तदिति स्मृतेः
प्रियाणीष्टानि सर्वाणि प्रियार्होऽर्हति चेत्यत । ८७२

गन्धपुष्पार्चनाद्यैश्च प्रणामस्तुतिकीर्तनै
सर्वथापि च सर्वैश्च पूजनीयोऽर्हं उच्यते । ८७३

स्मृतिमात्रेण भक्ताना करोति सकलान् प्रियान्
दुष्टाना तत् वृणोतीति हिनस्ति प्रियकृच्च स । ८७४

भजता चाखिलां प्रीतिं सर्वथा वर्धयत्यत
साधुसरक्षणाच्चैव प्रीतोऽसौ प्रीतिवर्धन । ८७५

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः
रविर्विरोचनः सूर्यः सविता रविलोचनः। १०७

स्तो० भा० :-

विहायसमथाकाशो गतिरस्येति चाश्रय
विहायसगतिर्भास्वान् विष्णुर्विष्णुपद च यत् । ८७६

द्योतते स्वत एवासौ ज्योतिश्चेति प्रकीर्तित
"नारायण पर ज्योति"रिति श्रुत्याभिमन्त्रणात् । ८७७

शोभना च रुचिश्चेति दीप्तिरिच्छापि वा स्वत
अस्येति सुरुचिश्चेति विष्णुरेव प्रकीर्तित । ८७८

समस्तदेवतोद्देश प्रवृत्तेष्वपि कर्मसु
हुत भुङ्क्ते भुनक्तीति प्रोक्तस्तु हुतभुग् हरि । ८७९

सर्वत्र वर्तमानत्वात् प्रभवात् प्रभुरित्यत
त्रयाणामपि लोकाना विभुत्वात् विभुरेव स । ८८०

---

टि:-

८७२ प्रियार्हाय नम    ८७३ अर्हाय नम
८७४ प्रियकृते नम    ८७५ प्रीतिवर्धनाय नम    ८७६ विहायसगतये नम
८७७ ज्योतिषे नम    ८७८ सुरुचये नम
८७९ हुतभुजे नम    ८८० विभवे नम

रवते तु सदाकाशे गच्छतीति रविस्तत
रसानादत्त इत्युक्तो रव्यात्मा रविरच्युत । ८८१

द्वादशादित्यरूपत्वात् स्वस्य वा प्रभवेष्वपि
विविध रोचते चेति विरोचन इति स्मृत । ८८२

जगत् प्रसूते यश्चैतत् सुवति प्रेरयत्यपि
जगत् कर्मसु चेत्युक्त सूर्यो विष्णुस्वरूपत । ८८३

सूतेश्च सुवतेर्वापि तृचा तु सविताह्यसौ
सर्वस्य जगतश्चेति सविता विष्णुरुच्यते । ८८४

रविस्तु लोचन चक्षुरस्येति रविलोचन
"अग्निर्मूर्धेति"च श्रुत्या चन्द्रसूर्यौ यदक्षिणी । ८८५

**अनन्तो हुतभुक् भोक्ता सुखदो नैकजोऽग्रजः**
**अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः।** १०८

श्लो० भा० :-

देशकालापरिच्छिन्न सर्वगो नित्य इत्यत
अन्तो नास्त्यस्य चानन्त शेषरूपोपि वा हरि । ८८६

हुत भुनक्तीरयखिल तच्च पालयतीत्यत
हुतभुग् चेति स प्रोक्तो विष्णुरेवाखिलात्मक । ८८७

भोग्यामेवाखिला भुङ्क्ते प्रकृतिश्चाप्यचेतना
भोक्ता च प्रथितश्चासौ जगत् पालयतीति वा । ८८८

---

टि -

८८१ "रसानाञ्च तदादानात् रविरित्यभिधीयते" इति विष्णुधर्मोत्तरे–रवये नम
८८२ विरोचनाय नम
८८३ "राज सूय सूर्य " इति पाणिनिवचनात् सूर्य –सूर्याय नम
८८४ "प्रजाना तु प्रसवनात् सवितेति निगद्यते" इति विष्णुधर्मोत्तरे–सवित्रे नम "
८८५ "अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ 'इति श्रुते –रविलोचनाय नम
८८६ अनन्ताय नम ८८७ हुतभुजे नम ८८८ भोक्त्रे नम

सुखदस्तु ददातीति सुखं मोक्षमयासुख
यति खण्डयतीत्युक्तो हरिश्चासुखदोऽपि वा । ८८९

असकृत् जायमानत्वात् मत्स्यकूर्मादिरूपतः
धर्मसंरक्षणार्थञ्च नैकजो हरिरुच्यते । ८९०

हिरण्यगर्भरूपेण जायतेऽग्रे स चाग्रजः
"हिरण्यगर्भः समवर्तताग्रे"चेति च श्रुतेः । ८९१

अवाप्तसर्वकामत्वादप्राप्तेर्हेत्वभावतः
निर्वेदो नास्य चास्तीति प्रोक्तोऽनिर्विण्ण एव सः । ८९२

आभिमुख्येन तु सतो मृष्यते क्षमते यतः
यस्तु सत्यपराधेऽपि सदामर्षी स कीर्तितः । ८९३

तमनाधारमाधारमधिष्ठाय यतोऽपि च
लोकास्तिष्ठन्ति तत् ब्रह्म लोकाधिष्ठानमुच्यते । ८९४

योगी पाद्भुतरूपेण समाधौ पश्यतीत्यतः
अद्भुतरूप स्वरूपादिसामर्थ्याद्भुत उच्यते । ८९५

सनात् सनातनतमः कपिलः कपिरप्ययः
स्वस्तिदः स्वस्तिकृत् स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः । १०६

श्लो० भा० :-

चिरकालार्थवचन सनात शब्दो निपातितः
सनात् नित्यम्पश्यो वा विष्णुर्ब्रह्म तदव्ययम् । ८९६

---

टि :-

८८९ सुखदाय नमः अथवा असुखदाय नमः

८९० नैकजाय नमः ८९१ अग्रजाय नमः ८९२ अनिर्विण्णाय नमः

८९३ सदामर्षिणे नमः ८९४ लोकाधिष्ठानाय नमः

८९५ "[illegible] न [illegible] इति [illegible] "[illegible]" इति [illegible] इति भाष्ये -अद्भुताय नमः

८९६ "[illegible] पुराणः [illegible]" इति विष्णुपुराणे सनातनेति [illegible] इति [illegible] -सनाताय नमः

सर्वकारणभूतत्वात् विरिञ्चादिस्वरूपिणां
सनातनानां श्रेष्ठोऽसौ सनातनतमः स्मृतः। ८९७

बडवानलवर्णत्वात् बडवानलरूपतः
कपिलः स हरि प्रोक्त सांख्यकृत् कपिलोऽथवा। ८९८

सूर्यात्मा कपिरित्युक्त कं जल रश्मिभिः पिबन्
कपिर्वराहश्रेष्ठोक्त्या यज्ञवाराह एव वा ८९९

अपियन्ति लयं यान्ति जगन्ति सकलान्यपि
प्रळयेऽस्मिन्निति प्रोक्तश्चाप्ययोऽच्युत एव स.। ९००

आशीर्वचश्च निष्पापं क्षेम मंगळमित्यपि
स्वस्ति चेति ददातीति भक्तानां स्वस्तिद. स्मृत.। ९०१

आशीर्वचनरूपादि सर्वमगळमेव यत्
स्वस्ति करोति भक्ताना स्वस्तिकृत्चेति कीर्तितः। ९०२

दिव्यमंळरूप यत् परमानन्दलक्षण
आत्मीयमिति तत् स्वस्ति विष्णुरेवाव्ययः स्वत.। ९०३

स्वस्तिभुक् स्वस्तिभुङ्क्ते स्वं परमानन्दलक्षण
पालयत्यपि वा स्वस्ति भक्ताना च भुनक्ति यत् ९०४

दक्षते स्वस्तिरूपेण वर्धते स्वस्तिदक्षिण.
स्वस्तिदाने समर्थो वा तत्प्रदाने च शीघ्रतः। ९०५

---

टि :-

८९७ सनातनानामतिशयेन सनातनत्वात् सनातनतम. –सनातनतमाय नम.

८९८ बडवानलस्य कपिलो वर्ण इति तद्रूपी कपिल –कपिलाय नम

८९९ क जल रश्मिभि· पिबन् कपि सूर्य "कपिर्वराह श्रेष्ठश्च" इति वचनात् वराह यज्ञवराहरूपी वा–कपये नम

९०० प्रळये अस्मिन् जगन्ति अपियन्ति लय यान्तीति अप्यय.–अप्ययाय नम

९०१ स्वस्तिदाय नम ९०२ स्वस्तिकृते नम

९०३ स्वस्तीत्यव्यय इति स्वस्ति नम ९०४ स्वस्तिभुजे नम.

९०५ दक्षिण शब्द आशुकारिणि वर्तते शीघ्र स्वस्ति दातु अयमेव समर्थ इति अस्य स्मरणादेव सिध्यन्ति सर्वसिद्धय इति भाष्ये–स्वस्तिदक्षिणाय नम

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः । ११०

श्लो० भा० :-

कर्म रागप्रकोपाश्च रौद्राः क्रूरा न यस्य सः
अप्राप्तसर्वकामत्वादरौद्रश्चारिषड्जयी । १०६

आसीनोऽपि च कुण्डलाकृति वपुः शेषोऽप्यसौ कुण्डली
धत्ते कुण्डलमेकमेव सततं यो भानुबिम्बप्रभम् ।
बिभ्राणो मकराख्यकुण्डलयुगे यः सांख्ययोगात्मिके
साक्षाद् विष्णुरसौ च शेषवपुषा प्रोक्तो द्विधा कुण्डली ॥ १०७

समस्तलोकरक्षार्थं मनस्तत्त्वात्मकं च यत्
धत्ते सुदर्शनाख्यं तत् चक्रं चक्रीति कीर्तितः । १०८

विक्रमः पादविक्षेपः स यं चाप्यस्य विक्रमी
अन्येभ्यः पुरुषेभ्योऽपि विलक्षणतया स्वतः । १०९

ऊर्जितं शासनं चास्यैवमुक्तः सोऽर्जितशासनः
"श्रुति स्मृती ममैवाज्ञे" प्रोक्तो भगवता स्वयम् । ११०

"यतो वाचो निवर्तन्ते" श्रुत्या वाचामगोचरः
अतिगच्छति शब्दानित्युक्तः शब्दातिगो हरिः । १११

वेदैश्च सर्वैरपि यस्तु वेद्यः सर्वेऽपि ते यत् पदमामनन्ति
श्रुतिस्मृतिभ्यामपि वर्णितोऽसौ शब्दैःसहो शब्दसहोऽपि सर्वैः । ११२

---

टि:-

१०६ कर्मरागकोपाश्च रौद्रा यस्य नासन्ति । अप्राप्तसर्वकामत्वात् रागद्वेषादिरहितात् —अरौद्राय नमः

१०७ शेषरूपेण कुण्डली सहस्रांशुमण्डलोपमकुण्डलधारणात्, यद्वा सांख्ययोगात्मके कुण्डले मकराकारे अस्य स्त इति कुण्डली—कुण्डलिने नमः

१०८ चक्रिणे नमः       १०९ विक्रमिणे नमः       ११० ऊर्जितशासनाय नमः

१११ शब्दातिगाय नमः

११२ "सर्वे वेदा यत् पदमामनन्ति" इति श्रुतेः "वेदैश्च सर्वैरहमेव वेद्यः" इति स्मृतेश्च शब्दसहः—शब्दसहाय नमः

ससारतापत्रयतप्तजीविना तापापहारित्ववशादशेषत
स्वकर्मणासौ शिशिरस्तुंसाम्यत समानताय शिशिर प्रकीर्तित । ९१३

आत्मप्रकाशनपरामपि शर्वरीं यत्
ससारिणामपि करोति च सविदा वा ।
ससारबोधनपरामपि वा निशा ता
तत् शर्वरीकर इति प्रथितो हि विष्णु ॥ ९१४

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणांवरः
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः। १११

श्लो० भा०:-

पूर्णाभीष्टो निष्कामोसौ कामाभावे क्रोधाभाव
क्रोधाभावात् क्रौर्याभावे क्रूरो नैवेत्यक्रूरोसौ । ९१५

कर्मणा मनसा वाचा वपुषा शोभनात्मन
पेश शोभास्य चास्तीति पेशल स प्रकीर्तित । ९१६

दक्ष प्रवृद्ध शाग्तश्च शीघ्रकारीति च त्रय
परस्मिन् नियत चेति दक्षो विष्णुरुदाहृत । ९१७

दक्षिणो दक्षशब्दार्थो गतिहिंसार्थतोपि वा
दक्षते च हिनस्तीति दुष्टान् पापानि दक्षिण । ९१८

---

टि:-

९१३ तापत्रयतितप्ताना विश्रामस्थानत्वात् शिशिर –शिशिराय नम

९१४ ससारिणामात्मा शर्वरीव शर्वरी, ज्ञानिना पुन ससार शर्वरी, तामुभयेषा करोतीति शर्वरीकर - "या निशा सर्वभूताना तस्या जागर्ति सयमी यस्या जाग्रति भूतानि सा निशा पश्यतो मुने इति भगवद्वचनात्–शर्वरीकराय नम

९१५ क्रौर्यं नाम मनोधर्म प्रकोपज आन्तर सन्ताप साभिनिवेश अवाप्तसमस्त कामत्वात् कामाभावादेव कोपाभाव तस्मात् क्रौर्यमस्य नास्तीत्यक्रूर –अक्रूराय नम

९१६ पेशलाय नम ९१७ दक्षाय नम ९१८ दक्षिणाय नम

सत्त्व गुणमधिष्ठाय स्वसृष्ट च जगत्त्रय
सर्व च सम्यगेवासौ रक्षतीति च रक्षण । ९२८

सन्तस्तु सज्जनाश्चेति विद्याविनयवृद्धये
तद्रूपेणैव भगवान् वर्तते सन्त उच्यते। ९२९

स्वसृष्टाश्च प्रजा सर्वा प्राणरूपेण जीवयन्
जीवनश्चेति विख्यातो भगवान् विष्णुरेव स । ९३०

परित सर्वतो विश्व व्याप्य चावस्थित स्वय
सतत चेति विश्वात्मा पर्यवस्थित उच्यते । ९३१

**अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः**
**चतुरश्रो गभीरात्मा विदिशो व्यादिशो दिशः। ११३**

श्लो० भा० :-

अनन्तरूपो विश्वात्मा प्रपञ्चात्मतयास्य यत्
अनन्तान्यप्यसख्यानि सन्ति रूपाणि तिष्ठत । ९३२

अनन्ताऽपरिमेयास्य श्री पराशक्तिरित्यत
परास्य विविधा शक्तिरनन्तश्री प्रकीर्तित । ९३३

मन्यते ज्ञायते मन्यु क्रोधो वापि परैरिति
जितमन्युर्जितो मन्युर्येन कारुण्यरूपिणा। ९३४

ससारज महाघोर भय पुसामशेषत
सर्वथा चापहन्तीति प्रोक्तश्चासौ भयापह । ९३५

चतस्रो प्यश्रयोऽस्येति चतुरश्र प्रयच्छति
पुसा कर्मानुरूपश्च फल न्यायसमन्वित । ९३६

---

टि :-

९२८ रक्षणाय नम ९२९ सद्भ्यो नम
९३० जीवनाय नम ९३१ पर्यवस्थिताय नम
९३२ अनन्तरूपाय नम ९३३ अनन्तश्रिये नम ९३४ जितमन्यवे नम
९३५ भयापहाय नम
९३६ न्यायसमवेत चतुरश्र पुसा कर्मानुरूप फल प्रयच्छतीति –अथवा
छत्रधारा–चतुरश्राय नम

परिच्छेत्तुमशक्यत्वात् गम्भीरोऽस्तीति च स्वत
आत्मा स्वरूप चित्त वा गभीरात्मा प्रकीर्तित । १३७

सम्यगेवाधिकारिभ्यो विविधानि फलान्यपि
दिशतीति विशेषेण विदिशो विष्णुरुच्यते । १३८

शक्रादीनामशेषाणां आशा च विविधामपि
स्वस्वाधिकारानुरूप व्यादिशन् व्यादिश स्मृत । १३९

दिशतीति दिश प्रोक्त सर्वेषामपि कर्मणा
वेदात्मापि फलानीति सकलानि यथोचितम् । १४०

अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः
जननो जन जन्मादिर्भीमो भीमपराक्रमः ११४

श्लो० भा०:-

सर्वकारणभूतत्वात् आदि कारणमस्य यत्
विद्यते नैव सानादिर्विष्णुरेव प्रकीर्तित । १४१

सर्वाधारा तु भूरस्य भुवोऽप्याधार इष्यत
भूर्भुवश्चैवनामैतत् प्राहुरन्ये तु भू पृथक् । १४२

भुवो लक्ष्मीश्च शोभा वा सात्मविद्यापि वा पृथक्
एव वा भूर्भुवो लक्ष्मी प्राहुरन्ये पृथक् पदम् । १४३

---

टि -

१३७ गभीरात्मेति नाम   १३८ विदिशाख्य नाम

१३९ व्यादिशाख्य नाम   १४० दिशाख्य नाम

१४१ अनादि नाम

१४२ भूर [illegible] भूर्भुव [illegible] नाम—भूरे भुवो नाम (भुवो भूर्भुवो वा)

१४३ [illegible] अथवा [illegible] [illegible] भूर्भुवो [illegible] नामैकं [illegible] नाम
(भूर्भुवो [illegible] नाम) [illegible]

सुवीर शोभना ईरा विविधा गतयोऽस्य यत्
शोभन गच्छतीर्त्ते वा सूर्यादिविविधात्मना । ९४४

दधते रक्षतीत्यगमुक्त केयूरमगद
दे चास्य रुचिरे चेति शोभने रुचिराङ्गद ९४५

प्रपञ्चेऽस्मिन् प्रजा सर्वा जन्तूंश्च जनयन्निति
जगतो जनकश्चेति जननोऽसौ प्रकीर्तित । ९४६

जायन्ते ये जनास्तेषा जन्म चाद्भव सत्य च
मूलकारणमादिश्च जनजन्मादिरुच्यते । ९४७

भीमस्तु भयहेतुत्वात् दैत्यादीनामधर्मिणा
"भयकृद्भय बन्धमुच इत्यादिवचनात् श्रुते । ९४८

दुष्टानामसुरादीना भयदत्त्व पराक्रम
प्रभवत्यस्य चाद्भीति प्रोक्तो भीमपराक्रम । ९४९

आधारनिलयोऽधाता पुष्पहासः प्रजागरः
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः, ११५

दशो० श्लो०:

पृथिव्यादि पञ्चभूतानामाधारत्वादयं स्वत
आधारस्तस्य निलयश्चाधारनिलय स्मृत । ९५०

धाता सन्धारकस्तस्मा न [illegible] पूर्वज स
धर्त्ता [illegible] धाता [illegible] वा क्रमः । ९५१

---

टि०

९४४ [illegible]
[illegible]

९४५ [illegible] ९४६ [illegible]

९४७ [illegible]

९४८ [illegible] ९४९ [illegible]

९५० [illegible]

९५१ [illegible]
[illegible]

ह्रासयच्च विकासोऽस्य पुष्पाणां मुकुळात्मना
प्रपञ्चात्मतया चेति पुष्पहास प्रकीर्तित । ९५२

निरवबुद्धस्वरूपत्वात् साधुरक्षणजागर
जागर्तीति प्रकर्षेण प्रोक्तश्चासौ प्रजागर । ९५३

सर्वेषामपि भूताना ऊर्ध्वं चोपरि संस्थित
ऊर्ध्वगश्चेति नान्यो वाप्यस्मादुच्चतरो ह्यत । ९५४

पन्थानोऽपि सतां मार्गा कर्माणीति च सत्पथा
आचरन् सत्पथाचारो लोकसंग्रहणाय तान् । ९५५

मृतान् परीक्षित् प्रभृतीन् प्राणदानेन जीवयन्
प्राणदश्चेति स प्रोक्तो जीविना जीव एव स । ९५६

ओंकार प्रणवो नाम वाचक परमात्मन
तदभेदोपचारेण प्रणवो विष्णुवाचक । ९५७

गृष्टयादि लोक सकल व्यवहारमेव
यो वा करोति पणते स पणो हि विष्णु ।
यत् पुण्यकर्मफलक तु पणं स नित्य
संगृह्य कर्मफलदो हि पणो यथार्हम् ॥ ९५८

प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः
तत्वं तत्वविदेकात्मा जन्ममृत्युजरातिगः। ११६

श्लो० भा०:-

---

टि:

९५२ पुष्पहासाय नमः          ९५३ प्रजागराय नमः          ९५४ ऊर्ध्वगाय नमः
९५५ सत्पथाचाराय नमः          ९५६ प्राणदाय नमः          ९५७ प्रणवाय नमः

९५८ [illegible]

प्रमितिश्च प्रमाण तत् याथार्थ्येनातिनिर्मल
सत्यसवित्स्वरूपश्च "प्रज्ञान ब्रह्म" च श्रुते । ९५९

प्राणाद्याश्चेन्द्रियाण्यस्मिन् निलीयन्तेपि वापरे
जीवोपि प्राणनिलयो जीवाश्च निलयन् हरन् । ९६०

प्राणापानादिकान् प्राणानस्वरूपेण चाखिलान्
बिभर्ति पोषयत्यस्मात् प्राणभृत् स प्रकीर्तित । ९६१

प्राणापानादिभिश्चैव प्राणाख्यै पावनै सदा
प्राणिनो जीवयन् योसौ प्राणजीवन उच्यते । ९६२

परमार्थोऽमृत सत्य तथ्य सत् तत्त्वमर्थत
तस्य भावस्तु तत्व सत् परमार्थब्रह्म चोच्यते । ९६३

तत्तद्वस्तुस्वरूप च स्वस्वरूपमथापि वा
यथावत् वेत्ति तत्व सत् तत्ववित् चेति कीर्तित । ९६४

एकश्चापि तथात्मा ऽसावेकात्मा च प्रकीर्तित
"आत्मा वा इदमेके"ति श्रुतिमन्त्रानुसारत । ९६५

जन्म मृत्यु जराञ्चैव यो वातीत्य तु गच्छति
"न जायते म्रियते"श्रुत्या जन्ममृत्युजरातिग । ९६६

---

टि :-

९५९ प्रमिति सवित् स्वयप्रमाप्रमाण इति भाष्ये–"प्रज्ञान ब्रह्मेति" च श्रुते" ज्ञानस्वरूपमत्य तनिर्गल परमार्थत तमेवार्थस्वरूपेण भ्रान्तिदर्शनत स्थित" इति विष्णुपुराणे–प्रमाणाय नम

९६० प्राणा इन्द्रियाणि यत्र जीवे निलीयन्ते तत् परतन्त्रत्वात् देहस्य धारका प्राणापानादयो वा तस्मिन् निलीयन्ते प्राणितीति प्राणो जीव परे पुसि निलीयते इति वा, प्राणान् जीवाश्च सहरन्तीति वा प्राणनिलय –प्राणनिलयाय नम

९६१ प्राणभृते नम

९६२ प्राणिनो जीवयन् प्राणजीवन यथा च "न प्राणेन नापानेन मर्त्यो जीवति कश्चन इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" इति श्रुते –प्राणजीवनाय नम

९६३ तत्वाय नम ९६४ तत्वविदे नम

९६५ एकात्मने नम ९६६ जन्ममृत्युजरातिगाय नम

यज्ञाश्चाङ्गानि यस्येति यज्ञवाराहमूर्तिमान्
'वेदपादो यूपदंष्ट्र' स्मृत्या यज्ञाङ्ग उच्यते । ९७४

यज्ञान् यज्ञफलानीति यजमान वाहयत्यपि
यज्ञं प्रापयतीत्युक्तो यज्ञवाहन एव स । ९७५

यज्ञभृत् यज्ञकृत् यज्ञी यज्ञभुक् यज्ञसाधनः
यज्ञान्तकृत् यज्ञगुह्यमन्नमन्नाद एव च। ११८

श्लो० भा०:–

विभर्ति सकलान् यज्ञान् पातीति च यथोचित
यज्ञभृत् चेति स प्रोक्तो यज्ञभोक्ता प्रभुश्च स । ९७६

जगदादौ करोतीति यज्ञं च सृजतीति स
तदन्ते संहरन् तच्च कृन्ततीति च यज्ञकृत्। ९७७

यज्ञानामपि सर्वेषा तत्समाराधनात्मना
शेषभूतोयमेवात शेषी यज्ञीति कीर्तित । ९७८

यज्ञं भुनक्ति भुङ्क्ते वा यज्ञभुङ् निजवाक्यत
"अहं हि सर्वयज्ञाना भोक्ता च प्रभुरेव च"। ९७९

यज्ञ साधनमित्यस्य प्राप्तावपि तु य स्वत
यज्ञसाधन इत्युक्त साधयन् सकलानपि। ९८०

यज्ञस्यान्त फलाप्ति च कुर्वन् यज्ञान्तकृच्च स
पूर्णाहुत्या च वैष्णव्यायज्ञस्यान्ते समाप्तिकृत्। ९८१

गुह्य रहस्य यज्ञाना ज्ञानयज्ञोऽथवा पर
फलाभिसन्धिराहित्यात् यज्ञगुह्य च ब्रह्म तत्। ९८२

---

टि :-

९७४ यज्ञा अङ्गान्यस्येति वराहमूर्ति —यज्ञाङ्गाय नम
९७५ यज्ञवाहनाय नम ९७६ यज्ञभृते नम ९७७ यज्ञकृते नम
९७८ यज्ञिने नम ९७९ यज्ञभुजे नम ९८० यज्ञसाधनाय नम
९८१ यज्ञान्तकृते नम ९८२ यज्ञगुह्याय नम.

अद्यते भुज्यतेऽन्न यत् भोग्यरूप च ब्रह्म तत्
प्रलयेऽत्ति जगत्सर्वं भोक्ताप्यन्न च ब्रह्म तत्। ९८३

अन्न भोग्य जगत्सर्वं अत्तीत्यन्नाद उच्यते
भोग्यभोक्तृस्वरूपेण विष्णुरेवाखिल जगत्। ९८४

आत्मयोनिः स्वयं जातो वैखानः सामगायनः
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः। ११९

श्लो० भा० :-

आत्मैव योनिरस्येति यदुपादानकारण
मायायो या कारण चागावात्मयोनि प्रकीर्तित। ९८५

निमित्तकारण चासौ नान्य कश्चन येन्यत
स्वयमात्मा स्थापित यद् स एवोमनकारणम्। ९८६

रसातल विशेषेण खनन्नो धरणीमगो
हनिष्या च वराहात्मा हिरण्याक्षं जघान यत्। ९८७

वेदप्रधानभूतानि सामान्यपि तु गायति
हयग्रीवात्मको यत्तु सामगायन उच्यते। ९८८

वसुदेवस्य पत्नी या देवकन्यापि या शुभा
देवकी नन्दनत्वाच्च देवकी नन्दन स्मृत। ९८९

---

सृजतीति जगत्सर्वं सर्वथा चैक एव स
स्रष्टा तु कीर्तितो विष्णुर्नान्य कश्चन चेत्यत । ९९०

क्षियन्ति निवसन्त्यस्या प्राणिनश्चेति सा क्षिति
क्षितेर्भूमेरधीशोऽसौ क्षितीशो राघव स्मृत । ९९१

कीर्तित पूजितो ध्यात स्मृतश्चापि क्षणेन स
पापराशिमशेषञ्च नाशयन् पापनाशन । ९९२

शंखभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः
रथांगपाणिरक्षोभ्यः सर्वप्रहरणायुधः
सर्वप्रहरणायुध ओँ नम इति-। १२०

श्लो० भा० :-

भूताद्यहंकाररूप पाञ्चजन्याभिध च यत्
शख बिभर्ति यश्चासौ शखभृत् विष्णुरुच्यते । ९९३

विद्यामय नन्दकाख्यमसिमेव विशेषत
नन्दकी स हरि प्रोक्तो नित्य धत्ते च य स्वत । ९९४

मनस्तत्त्वात्मक चक्रमस्य चक्री सुदर्शन
यदाज्ञया च ससारचक्र च परिवर्तते । ९९५

अतीन्द्रियाद्यहंकारतत्त्वरूपमथास्य यत्
शार्ङ्गं नाम धनुश्चेति शार्ङ्गधन्वा प्रकीर्तित । ९९६

---

टि :-

९९० स्रष्ट्रे नम ९९१ क्षितीशाय नम

९९२ पक्षोपवासात् यत् पाप पुरुषस्य प्रणश्यति प्राणायामशतेनैव तत् पाप नश्यते नृणा, प्राणायाम सहस्रेण यत् पाप नश्यते नृणा क्षणमात्रेण तत् पाप हरेर्ध्यानात् प्रणश्यति इति वृद्ध शातातपोक्तत्वात् पापनाशन—पापनाशनाय नम

९९३ शखभृते नम ९९४ नन्दकिने नम

९९५ चक्रिणे नम ९९६ शार्ङ्गधन्वने नम

गदा कौमोदकी नाम बुद्धितत्त्वाभिमानी
धरतीति विशेषेण प्रोक्तोऽसि गदाधर । ९९७

रथस्याङ्ग रथाङ्गञ्च चक्र नामायुध सदा
रथाङ्गपाणिरस्मीति पाणौ संस्थितमित्यत । ९९८

रथाङ्गाद्यायुधाग्र्यात् यस्य नास्ति मनो वर
अक्षोभ्यसीमनाभावैरक्षोभ्योऽसि कीर्तित । ९९९

प्रोक्तान्यस्य प्रहरणान्यायुधानि न केवल
किन्तु सर्वाणि सन्तीति सर्वप्रहरणायुध । १०००

---

टिः-

९९७ गदाधराय नम

९९८ रथाङ्गपाणय नम ९९९ अक्षोभ्याय नम

१००० सर्वप्रहरणायुधाय नम –ओं सर्वप्रहरणाय नम इति–

इतीद कीर्तनीयस्य केशवस्य महात्मन
नाम्ना सहस्र दिव्यानामशेषेण प्रकीर्तितम् । १२१

य इद शृणुयात् नित्य यश्चापि परिकीर्तयेत्
नाशुभ प्राप्नुयात् किञ्चित् सोऽमुत्रेह च मानव । १२२

वेदान्तगो ब्राह्मण स्यात् क्षत्रियो विजयी भवेत्
वैश्यो धनसमृद्ध स्याच्छूद्र सुखमवाप्नुयात् । १२३

धर्मार्थी प्राप्नुयात् धर्ममर्थार्थी चार्थमाप्नुयात्
कामानवाप्नुयात् कामी प्रजार्थी प्राप्नुयात् प्रजाम् । १२४

भक्तिमान् य सदोत्थाय शुचिस्तद्गतमानस
सहस्र वासुदेवस्य नाम्नामेतत् प्रकीर्तयेत् । १२५

यश प्राप्नोति विपुल ज्ञातिप्राधान्यमेव च
अचला श्रियमाप्नोति श्रेय प्राप्नोत्यनुत्तमम् । १२६

न भय क्वचिदाप्नोति वीर्य तेजश्च विन्दति
भवत्यरोगो द्युतिमान् बलरूपगुणान्वित । १२७

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपद । १२८

दुर्गाण्यतितरत्याशु पुरुष पुरुषोत्तम
स्तुवन्नामस सहस्रेण नित्य भक्तिसमन्वित । १२९

वासुदेवाश्रयो मर्त्यो वासुदेवपरायण
सर्व पापविशुद्धात्मा याति ब्रह्म सनातनम् । १३०

न वासुदेवभक्तानामशुभ विद्यते क्वचित्
जन्ममृत्युजराव्याधि भय नैवोपजायते । १३१

इम स्तवमधीयान श्रद्धा भक्तिसमन्वित
युज्येतात्मसुखक्षान्ति श्रीधृति स्मृति कीर्तिभि । १३२

न क्रोधो न च मात्सर्य न लोभो नाशुभा मति
भवन्ति कृतपुण्याना भक्ताना पुरुषोत्तमे । १३३

द्यौ सचन्द्रार्कनक्षत्रा ख दिशो भूर्महोदधि
वासुदेवस्य वीर्येण विधृतानि महात्मन । १३४

ससुरासुरगन्धर्वं सयक्षोरग राक्षस
जगत् वशे वर्त्ततेद कृष्णस्य सचराचरम्। १३५

इन्द्रियाणि मनो बुद्धि सत्त्व तेजो बल धृति
वासुदेवात्मकान्याहु क्षेत्र क्षेत्रज्ञ एव च। १३६

सर्वागमानामाचार प्रथम परिकल्प्यते
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युत। १३७

ऋषय पितरो देवा महाभूतानि धातव
जगमाजगम चेद जगनारायणोद्भवम्। १३८

योगो ज्ञान तथा साख्य विद्याशिल्पादि कर्म च
वेदा शास्त्राणि विज्ञानमेतन् सर्वं जनार्दनात्। १३९

एको विष्णुर्महत् भूत पृथक् भूतान्यनेकश
त्रीन् लोकान् व्याप्य भूतात्मा भुक्ते विश्वभुगव्यय। १४०

इम स्तव भगवतो विष्णोर्व्यासेन कीर्तित
पठेत् य इच्छेत् पुरुष श्रेय प्राप्तु सुखानि च। १४१

विश्वेश्वरमज देव जगत प्रभवाप्यय
भजन्ति ये पुष्कराक्ष न ते यान्ति पराभवम्। १४२

न ते यान्ति पराभवम् ओ नम इति–

# ॐ नमो नारायणाय

ओंकाराक्षरमेकमेव परमं ब्रह्मेति संभावयन्
ओङ्कारप्रणवप्रणादरसिकश्चोङ्कारचिद्रूपिणम् ।
ओङ्कारैकपरायणं परमहं नारायणं त्वां भजे
ओङ्कारोद्यवतीति संसरणतोऽप्यर्थं यथार्थीकुरु ॥ १

नम्यस्यास्य परात्मनस्तु परमे मन्त्रे द्वितीये पदे
नेत्याद्यस्तु निषेधितुं परमहङ्कारं मकारार्थकम् ।
नाहङ्कारवतां सुखश्च परमं जानन्ति मूढा न तत्
नित्यं तस्य जयार्थमेव भगवन् नारायणं त्वां भजे ॥ २

मोहौत्सुक्यमदादिलक्षणमहङ्कारं मकारार्थकं
मोहादेव विमोहिता न भगवन् जानन्ति जेतुं जनाः ।
मोहान्धाः पतितास्तु संसृतिमहो सन्तर्तुमेवाक्षमाः
मोहान्मोचय मोक्षदोऽसि भगवन् नारायणं त्वां भजे ॥ ३

नाराः दोषविवर्जितास्तदयनं वेदान्तवेद्यः पुमान्
नाराणामयनं जगज्जनयिता निर्दोषवान् मोक्षदः ।
नाकारो न विकारवान् पुनरसौ चित्रं विचित्राकृतिः
नान्यो वेत्ति यथार्थतोऽपि भगवन् नारयणं त्वां विभुम् ॥ ४

रामो दाशरथिः शिलापि तरुणी यत्पादसंस्पर्शतो
रामां भूमिसुतामवाप्य च धनुर्भङ्गात् भृशं कोपितं ।
रामं चाप्यनुसान्त्वयन् पुरमगाचावत्तु ताताज्ञया
रामालक्ष्मणसंयुतो वनमगात् योऽसौ स नारायणः ॥ ५

यश्चेनापि सुदुर्लभां श्रियमहो स्वश्रीविनाशाय च
यः सीतामसहायिनीं निशिचरो हृत्वा तु लङ्कां ययौ ।
यत्ते तस्य वधाय वालिनिधनं सुग्रीवसख्यश्च ते
यच्चाब्धेरतिलंघनं हनुमता दग्धा च लङ्कापुरी ॥ ६

णाकारादिपदं यथा न सुलभं विष्णोः पदं ते तथा
णेत्यस्यैव निषेधवाचकतयाप्युत्पत्तिनाशौ न ते ।
णो वा निर्वृतिरेव मन्त्रघटितो दीर्घेण सैवास्तु मे
णस्त्वं कारणपूरुषोऽसि भगवन् नारायणं त्वां भजे ॥ ७

यद्भक्त्या तु विभीषणोऽपि शरणं त्यक्त्वाग्रजं त्वां ययौ
यद्भे शयनं समुद्रविनयं सेतोर्विधानं व्यधाः ।
यद्वान्यत्सकलं च राक्षसवधे शिष्टानुसंरक्षणं
यद्धेशाच्युत राधवेति सततं नारायणं त्वां भजे ॥ ८

नष्टाग्निर्न नमस्कोपि विचरन् नक्तंदिवं नास्तिको
नष्टश्रीरभवत् पुरा तु कुलटासंसर्गतोऽजामिळः ।
नष्टासुः स तु कालकिङ्करभयात् नारायणं चाह्वयत्
नष्टोऽभूत् नरकोऽपि तस्य भगवन् त्वन्नामसंकीर्तनात्॥ ९

ओंकारः प्रणवस्त्रिवर्णघटितस्तत्त्वं विवेदात्मकं
अश्चाप्युश्च मकारकोऽस्य घटकाः मूर्तित्रयार्थात्मकाः ।
ओंकारश्च तथा भवस्थितिलयं लीलाविभूत्यात्मकं
ओङ्कारोपि त्रिपाद्विभूतिरथवा मर्त्यार्थतत्त्वात्मकः ॥ १०

ओङ्कारः पुरुषो निषेधवचनादाद्यन्तहीनोऽपि नात्
मो भूमिः प्रकृतिः पुमान् परमतो नान्योस्ति नाकारतः ।
रः सूर्याग्न्यनिलात्मकोपि गदितः श्रीरेव येत्यक्षरात्
णः स्यात् कारणपूरुषः स भगवान् यो यज्ञसर्वात्मकः ॥ ११

निश्शेषवेदगदितार्थसमस्तसार-
मष्टाक्षरं पुरुषसूक्तयथार्थतत्त्वं ।
मन्त्रोत्तमञ्च सकृदेव समुच्चरन्तो
मुक्ता भवन्ति किमु भक्तिसमन्विता ये ॥ १२

अष्टाक्षरस्तोत्रमिदं पवित्रं
शिष्टास्तु नित्यं प्रपठन्ति भक्त्या ।
कष्टानि नष्टानि भवन्ति तेषा-
मिष्टानि सर्वाणि च ते लभन्ते ॥ १३

इत्यष्टाक्षरमहामन्त्रभाष्य स्तुतिः

# श्री धन्वन्तरिकेशादिपादम्

दुग्धाब्धिमन्थनविधावुदितः सुधांशु-
रन्यः कलङ्करहितोऽग्रह एव भासा ।
राकात्मऽकोपि सततं न कदापि रिक्तो
धन्वन्तरिर्महितवान् महसां महिष्ठः ॥ १

रत्नोज्वलन्मकुटकोटितटारुणोऽग्रे
मौलिस्फुरन्मणिगणैर्द्युमणिः क्षणेन ।
उद्यत्प्रभापटलमण्डलमण्डितस्य
सद्यः प्रफुल्लमयि नीलमुखारविन्दम् ॥ २

अर्द्धेन्दुभासुरविशालकळायशोभे
लंबालकाळिलळितावलिलोभनीये ।
भ्रूवल्लिकाभ्रमरपाळितटोर्ध्वफाले
कूर्चोपरि प्रविलसद्धवळोर्ध्वपुण्ड्रः ॥ ३

अक्षीणमीक्षणविशेषवशाज्जगन्ति
निर्माति पाति विनिहन्ति यथेच्छयातः ।
पापान्यपांगवलनैरपनीयमानः
सस्नेहसान्द्र करुणामसृणायताक्षः ॥ ४

वंशाख्यसेतुसमभक्तविविक्तनाड्यौ
निश्वासरूपनिगमादिसरित्प्रसारौ ।
नासापुटावनुपमाविति चास्य युक्तौ
निष्पन्दलक्ष्यरुचिरावलमीरितेन ॥ ५

नीलाश्मकान्तिमुकुराभकपोलदेशे
संक्रान्तलंबमणिकुण्डलमण्डितस्य।
गण्डस्थलच्छविरियन्तु मृदुस्मितेऽस्य
तापत्रयापहमहौषधिरेव नित्यम् ॥ ६

सन्ध्यारुणाभ दशनच्छदचक्रवाले
चन्द्रार्द्धविंब रदपाळियुगेन तावत् ।
राकात्मकोऽथ विधुरेव तु संहतार्गः
प्रद्योतते सुरुमिषेण मृदुस्मितेऽस्य ॥ ७

अर्धेन्दुरोचिरदपङ्क्तियुगाभिमुख्यात्
सुस्मेरचारुवदनेन्दुसुपूर्णिमायाम् ।
आहो विचित्रमिह चास्य तु चन्द्रिकायां
उत्फुल्लतीति सततं नु मुखारविन्दम् ॥ ८

उद्योततेऽस्य वदनेन्दुरहर्निशं वा
नास्तंगमिष्यति कदापि विचित्रमेव ।
वृद्धिक्षयावपि न चेति विचिन्त्य किञ्चि-
दीर्ष्याङ्कितो गगनगोऽथ विधुः कलङ्की ॥ ९

दृष्ट्वा निजार्द्रमधुरस्मितकान्तिलक्ष्मीं
लज्जावशादधिकसंभ्रमतोथ वाणी ।
अन्तः प्रविश्य महसा रसनाग्रदेशे
गूढं सदास्य वसतीति रमाधिका सा ॥ १०

मुक्तासुहीरमणिकाञ्चन कौस्तुभोद्यत्
मन्दारमुख्य तुलसीवनमाल्यहारैः ।
भ्राजिष्णुकंबुकमनीयतलं विलोक्य
वक्षःस्थली किमुत कण्ठमुपाश्रिता श्रीः ॥ ११

केयूरमंसभुवि काञ्चनरत्नभासा
नीलाचलोदित दिवाकरवद्विभाति ।
सत्कङ्कणादिविविधाद्भुतभूषणानि
राजन्यकाद्युदयभावतया स्फुरन्ति ॥ १२

आवृत्तचारुभुजदण्डमृणालकाण्डे
फुल्लांबुजद्विकरमूर्ध्वमधस्तथैवां ।
यत् कर्णिकापि च पृथक्क्रमशोरथांग
शंखं सुधाघटमथो जलजाद्भुतान्या ॥ १३

आभाति दक्षिणकरे तु सुदर्शनाख्यं
सर्वारिखण्डनविकर्त्तनरूपचक्रम् ।
शंखः शशीतरकरेपि च पाञ्चजन्यो
यत्तथ्यमाह दिनरात्रिमयेऽस्यपार्श्वे ॥ १४

सव्याधरे स्फुरति कोमळपाणिपद्मे
तापत्रयापहमहौषधिरूपमस्य ।
दिव्यामृतं दधदमत्रमहो विचित्रं
यत्सेवनादपि सुरा अमराः बभूवुः ॥ १५

वामेतराधरभुजे जलजां स धत्ते
दुष्टास्रचूषणवशात् सुखदां जलौकां ।
तावच्च पङ्कजवराभयदादि मुद्रां
चित्रं बिभर्त्ति बहुधा तु जगद्धिताय ॥ १६

दोर्भ्यां सुधाघटमसावपि चावराभ्या
धत्ते यदप्यभिमतञ्च विपश्चिदुक्त्या ।
संवीक्ष्य साधु सकलं धिषणाविशेषात्
संकल्पदार्ढ्यवशतः स्फुरति स्वरूपम् ॥ १७

सत्पद्मरागमणिभूषितहेमभूषा
प्रालंबिकातिलळिताऽपि ललन्तिकास्य ।
वक्षःस्थले निरुपमे लसतीति लक्ष्म्याः
क्रीडागृहं घटितमित्यवभाति नूनम् ॥ १८

सत्त्वैकधाम हृदयाब्ज निजावरोधे
नित्यं स्थितातिकुतुकात् कमलाथ तस्याः ।
वक्त्रामृतांशु शशलाञ्छनमेव भाति
श्रीवत्स इत्यभिधयास्य भुजान्तरेऽच्छे ॥ १९

याह्वन्तरे प्रकृतिरेव गुणत्रयी सा
नित्यं श्रिता यदिह सत्त्वगुणात्मिका श्रीः ।
श्रीकौस्तुभो ननु रजोगुणभावमेवं
श्रीवत्स एव हि तमोगुणतामुपैति ॥ २०

यत्सर्वभूतमयरत्नविराजिमाला
पञ्चात्मिका लसति चोरसि वैजयन्ती ।
मुक्तावली सुरभिवन्यसुमावली च
सर्वात्मकोऽयमिति तत् श्रुतिसिद्धमेव । २१

वक्षःस्थलात्तु हरिचन्दनलेपकूला
नीला नदीव रुचिराञ्जनरोमराजी ।
वेळानुगामिसरति क्रमशोऽथ नामे-
र्निम्नहृदे त्रिवलिकाऽत्रसिता निगूढम् ॥ २२

आमोदसान्द्रललितोदरनिम्नतायां
गंभीरनाभिसरसः स्थिरताश्च मन्यह् ।
संरक्षितुं सुघटितं निबिडं सुगाढं
पश्चात् कटीतटमहो पट्टतादृहटम् ॥ २३

रागावहं तु वसनं वरवर्णिनीनां
चारूरुमारनिलयास्पदमध्यकार्श्ये ।
रत्नप्रभाप्रसरसारसनानुसक्तं
संवीय सर्वसुमनोहरसार आस्ते ॥ २४

रंभादिगर्वशमनी पुनरुर्वशी सा
यद्भूतिलेशजनितेति तथास्य चोर्वोः ।
को वा पदार्थ उपमानपदे तदन्यो
वामेतरोपि ननु वाम इहेति चित्रम् ॥ २५

जानुद्वयं सुतलमेव जगन्मयस्य
श्रुत्यादिसिद्धमिह तत् प्रतिभाति चाग्रे ।
सम्मोहनश्च सुमुखं दृढकूर्मपृष्ठं
जङ्घोरुसन्धि सुखसंस्थगने सुवृत्तम् ॥ २६

जङ्घायुगं मदनकेळितटं समीक्ष्य
लक्ष्म्या प्रणम्य पदयोः प्रणयप्रकर्षात् ।
आश्लेषितं करपुटात् पृथुलं सुजातं
मञ्जीरमञ्जुमणिभासि मनोज्ञरूपम् ॥ २७

पादाब्जयोः प्रणमतां दिविषद्गणानां
कोटीररत्नमणिभिः प्रपदे प्रदीप्ते ।
हर्यश्वमकच्छपनिभेऽस्य नखच्छलेन
शीतांशुभिर्दशभिरुज्ज्वलिते मनोज्ञे ॥ २८

पद्भ्या तु भूमिरुदिता कमलात्मिका सा
पद्मापदं पदयुगं बहुधा प्रसिद्धम्
श्रीभूमिलाञ्छितमतोस्य पदाब्जयुग्मं
पापापनोदनमनन्तसुखास्पदञ्च ॥ २६

यत्पादपङ्कजरजःपतनादहल्या
पृथ्वी च पङ्करहिता नु कथं सुपूता ।
तस्योर्ध्वपादविधिधौत जलात्मिका सा
पूता पुनाति सकलानपि दिव्यगंगा ॥ ३०

एकेन पादतलविन्यसनेन चाधः
पाताळनीतदनुजोपि परात्मनोऽस्य ।
श्रेयःपदं परमवाप विचित्रमेतत्
सर्वाभिकाम्यमपि नो हृदि लालसीतु ॥ ३१

सौन्दर्यसारमयमूर्त्तिमतीव लक्ष्मीः
स्वस्यानुरूपमवृणोत् स्वयमेव कान्तम् ।
विश्वैकमोहनममुं सुगुणाभिरामं
यत्राकृतिर्गुणगणा हि भवन्ति तत्र ॥ ३२

अक्ष्णोर्मुखे करतले हृदि पादयोर्वा
केशादिपादमरविन्दरुचिं निरीक्ष्य ।
चाचल्यतेऽथ चपलेति चलेति चोक्ता
यस्यांगसौष्ठवरसाधिकतृष्णया श्रीः ॥ ३३

शुक्लांबरं च शशिवर्णमितीह विष्णुं
ध्यायन्ति नित्यमथ वेदविदो यथार्थम् ।
लावण्यवारिधिकृपांबुभरात् सुनीलः
शुभ्राभ्रवत् जलभरादिव भाति सोयम् ॥ ३४

स्वादूपभुक्तिरचिरादरुचिप्रदेति
स्वाभाविकी गतिरथास्य मनोहरस्य ।
लावण्यसाररसमेव मुहुः प्रपीय
भूयोपि गृद्धिरधिका न कदाप्यपक्षा ॥ ३५

विश्वातिशायिविशदांशविशेषरूपं
विश्वस्वरूपमयि विश्वविमोहनस्य ।
नेशाः समीक्षितुमहो स्वविलोचनैर्यं
पश्यन्ति चित्रमिह तेऽस्य कृपार्द्रदृष्ट्या ॥ ३६

श्रयन्ति चेत् सततमेव मनोगतं ये
पश्यन्ति सिद्धमुनिमानसराजहंसम् ।
नश्यन्ति दुःखदुरितान्यखिलानि तेषां
सिद्ध्यन्ति सर्वसुकृतानि सुखास्पदानि ॥ ३७

सृष्टिस्थितिप्रळयरंगविधानदक्षो
मार्गे नटो विविधवेषधरः स एकः ।
मिथ्यां तु तथ्यमिति मोहयतीह विश्वं
तथ्यस्वरूपमथ बोद्धुमहो न शक्यम् ॥ ३८

ब्रह्मादिभिः सुरगणैः सनकादिदिव्यैः
सप्तर्षिभिर्मुनिगणैरपि नारदाद्यैः ।
नित्यं निषेवितपदो दुरितापहारी
धन्वन्तरिर्मधुरिपुः किल शङ्करोर्मा ॥ ३९

धन्वन्तरीति किल शस्त्रभृतां वरिष्ठो
धन्वस्य दुःखदुरितात्ममरोस्तरिर्वा ।
धन्वन्तरिर्जयति सोथ यथार्थनामा
रागादिरोगनिवहान् हरिरार्यसेव्यः ॥ ४०

आकेशपादविशदांशविशेषरूपं
आनन्ददायकमनन्तसुखास्पदं ते ।
कारुण्यसान्द्रसचिरेक्षणचारुधामं
स्वामिन् मम स्फुरतु मन्ततमन्तरंगे ॥ ४१

को वा जनः प्रभवतीह भवत्प्रभावं
ज्ञातुञ्च नोतुमपि दिव्यभवत्स्वरूपम् ।
किञ्चांगसौष्ठवनिरीक्षणकौतुकेन
किं वापि जल्पति पुनश्चपलः क्षमस्व ॥ ४२

केशादिपादनुवर्नं तु नवीनमेवं
निर्व्याजभक्तिवशतो न विभक्तिलेशात् ।
क्लिसं कथञ्चिदधुना रघुनाथनाम्ना
तोषाय चेत् यदि सतां न वृथाश्रमोऽयम् ॥ ४३



# शुद्धिपत्रम्

| | | | | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|
| पृष्ठ | 7 | श्लोक | २ | व्याप्नातात्यध्य | व्याप्नोतीत्यस्य |
| ,, | 10 | टिप्पणी | १६ | ययोरभेद | तयोरभेद |
| ,, | 19 | श्लो० | ७३ | लोकेप | लोकेपु |
| ,, | 32 | मूल श्लोक | ३२ | महाद्रिघृत् | महाद्रिघृत् |
| ,, | 34 | श्लो० | १८४ | वक्षस्यास्या | वक्षस्यस्या |
| ,, | ,, | ,, | ,, | श्ति | इति |
| ,, | 38 | टि० | २२१ | हेनुर्वा | हेतुर्वा |
| ,, | ,, | श्लो० | २२३ | सम्यगोरणात् | सम्यगीरणात् |
| ,, | 39 | ,, | २२४ | सुर्धान | मूर्धान |
| ,, | ,, | ,, | २२६ | सहस्राक्षो्ऽस्य | महस्राक्षो्ऽस्य |
| . | 42 | ,, | २४९ | विशिनष्ट्यतिशेते | विशिनष्ट्यतिशेते |
| ,, | 51 | ,, | ३२५ | सर्वभूतानि" | सर्वभूतानी" |
| ,, | 66 | ,, | ४४३ | क्षामश्चेति | क्षामश्चेति |
| ,, | 71 | टि० | ४८६ | दिश गे | दिश ग |
| ,, | ,, | ,, | ,, | विमस्ति | बमस्ति |
| ,, | 73 | श्लो० | ५०७ | पुरुश्चासो | पुरश्चासो |
| ,, | 75 | ,, | ५१८ | च्श्राप | श्राप |
| ,, | 77 | ,, | ५२६ | महाश्रृगा | महाश्रृगो |
| ,, | 78 | ,, | ५४५ | गूढोत्मा | गूढात्मा |
| ,, | ,, | ,, | ५४७ | मृष्ट्यादि | मृष्ट्यादि |
| ,, | 80 | ,, | ५६३ | आदित्या | अदित्या |
| ,, | ,, | ,, | ५६४ | अदित्यो | आदित्यो |
| ,, | ,, | टि० | ५६५ | महिष्णावे | सहिष्णवे |
| ,, | 81 | श्लो० | ५६८ | शत्रणा | शत्रुणा |
| ,, | 88 | ,, | ६३२ | शेक | शोक |
| ,, | 93 | टि० | ६७३ | मंहाद्रु | मंहद्रि |
| ,, | 97 | श्लो० | ७०५ | प्रनास्यति | प्रनास्योति |
| ,, | 102 | ,, | ७३९ | अग्गानि | अङ्गानि |
| ,, | 105 | ,, | ७६५ | वर्णंवा | वर्णवा |
| ,, | 109 | ,, | ७९० | उत्कृष्टश्च | उत्कृष्टश्च |
| ,, | 118 | मू० श्लो० | १०६ | मत्वबात् | गन्दवान् |
| ,, | 123 | श्लो० | ९०९ | शर्म | शौर्य |
| ,, | 124 | ,, | ९१३ | गमानताय | गमानगायां |
| ,, | 127 | ,, | १४२ | मुरस्य | मुरग्या |
| ,, | 128 | ,, | ९४४ | विविधात्मना | विविधात्मन |